प्रह्लादाख्यो दैत्यः, तदभीष्टानां दानं यस्मात्; पक्षे प्रकृष्टो ह्लादो ब्रह्मानन्दः, तस्य. अभीष्टानां धर्मार्थकामानां च दानं यस्मात्; तस्मिन्। विबुधानां देवानां पण्डितानां च समुदयेन समुदायेन स्तूयमानमपदानं पूर्वचरित्रं यस्य तस्मिन्। 'अपदानं कर्म वृत्तम्' इत्यमरः। हिरण्याख्यो योग्यनया हिरण्यकशिपुः, नामैकदेशे नामग्रहणात्; स एव द्विरदः, सिंहवध्यत्वात्; तम्। कीदृशं तम्? अतिशयितमद एवाज्ञानपरिणामत्वाद् ध्वान्तम्, तत्तन्त्रं तदधीनम्, मदपरवशमिति यावत्; पक्षे हिरण्यं धनोपलक्षणम्, द्विरदाः सेनाऽङ्गोपलक्षणम्, मतिरसच्छास्त्रज्ञानम्, तत्संबन्धी मदो येषां तेषां ध्वान्तानां ध्वकारो ऽन्ते येषां नाम्नि तेषां माध्वानां तन्त्रं शास्त्रं निहन्तुं शेषक्षोणीभृतः शेषाचलस्यान्तः प्रविलसितं शोभमानं पदं स्थानं यस्याहोबलाख्यक्षेत्रस्य, तस्य गर्भान्मध्यात्, पक्षे, अशेषाणां समस्तानां क्षोणीभृतां राज्ञां मध्ये प्रविलसिते पदे चरणौ यस्याहोबलाख्यस्य पुरुषधौरेयस्य, तस्य क्षेत्रं पत्नी, तस्या गर्भात्, प्रादुर्भूते; धीरे धैर्यशालिनि, पक्षे धियं रातीति धीरः पण्डितस्तस्मिन्; सतां शास्त्राणां योनिः कारणम्, 'यस्य निःश्वसितं वेदाः,' 'छन्दाꣳसि जज्ञिरे तस्मात्' इत्यादिश्रवणात्; सच्छास्त्राण्येव योनिर्ज्ञापकहेतुर्यस्येति वा, 'तं त्वौपनिषदं पुरुषं पृच्छामि' (बृ० उ० ३-९-२६) इति श्रवणात्, शास्त्रयोनित्वाधिकरणे द्वेधा ऽपि व्याख्यानात्; पक्षे सच्छास्त्राणां योनिः कर्ता, ग्रन्थकर्तेति यावत्; तस्मिन्भुवनगुरौ नृसिंहे नरकेसरिणि, नृसिंहनामके च मम भक्तिरस्त्विति प्रार्थना। अत्रोपमेयोपमाया उपमाया अभेदस्य वा ध्वनिः। श्लेषो ऽलंकारः। सो ऽपि च प्रकृतोभयविषयकः सभङ्गो ऽभङ्गश्च। स्रग्धरा वृत्तम्॥ १॥

May my devotion be unto Lord (my preceptor) Nṛ-simha, the bestower of Prahlāda's heart's desires

(of Supreme Bliss as well as other goals of human desire), whose glorious deeds of old have been extolled by the celestial hordes (assemblage of the wise), who sprang forth in the holy place of Aho-bala *effulging* amidst the region of mount S'eṣa (who came out of the loins of the spouse of Aho-bala, whose feet were ever present in the hearts of one and all of the princes) to slay the elephant Hiraṇya influenced by the extreme rut of darkness (to refute the tenets of the Dhvānta-s [Mādhva-s, the followers of Madhva] filled with the pride of gold, elephants and their false doctrines), the Brave One (one brimming with learning), the fountain-source of sacred lore, (the author of sacred books) and the father of the Universe (the spiritual guide of the world). (1)

आ प्राचः कामरूपाद् द्रुहिणसुतनदप्लाविताद्दा प्रतीचो
[1]गांधारात्सिन्धुसान्द्राद्रघुवरचरिताद्दा च सेतोरवाचः ।
आ केदारादुदीचस्तुहिनगहनतः सन्ति विद्वत्समाजा
ये ये तानेष यत्नः सुखयतु समजान्कश्चमत्कर्तुमीष्टे ॥

कामरूपगांधारौ देशौ । सेतुकेदारौ क्षेत्रे । द्रुहिणसुतसिन्धू नद- । विदुषां विद्योपासकानां समाजाः, 'न शिल्पादिज्ञानयुक्ते विद्वच्छब्दः प्रयुज्यते' इत्यादिना विद्वच्छब्दस्योपासकपरतायास्त्रिंशत्याम् (श्लो० ८५) प्रदर्शनात् । समजाः पशुगणाः । 'पशूनां समजोऽन्येषां समाजः' इत्यमरः ॥ २ ॥

[1] ०सिन्धुसार्द्राद्रघु०

May this attempt of mine satisfy the assemblies of learned men (to be met with) as far to the east as Kāma-rūpa over which the river Brahma-putra flows, as far to the west as Gāṃ-dhāra, profusely watered by the Indus, as far to the south as Setu hallowed by the foot-prints of Raghu-vara, and as far to the north as Kedāra, thickly covered with snow. Who has the power to gratify multitudes of brutes? (2)

स जयति महान्प्रकाशो यस्मिन्दृष्टे न दृश्यते किमपि ।
कथमिव तस्मिञ्ज्ञाते सर्वं विज्ञातमुच्यते वेदे ॥ ३ ॥

स सर्वेषामात्मत्वेन प्रसिद्धः, महान्देशकालाद्यनवच्छिन्नः पराप्रकाश्यः, प्रकाशः सर्वदा ऽनावृतात्मस्वरूपज्योतिः, 'स्वरूपज्योतिरेवान्तः' इति रहस्यागमात्, 'न तत्र सूर्यो भाति' (क० उ० ५-१५) इत्यादिश्रवणाच्च । जयति सर्वोत्कर्षेण वर्तते । यस्मिन्नधिष्ठाने दृष्टे निर्विकल्पात्मकचरमवृत्तिविषयीकृते सति किमपि दृश्यं न दृश्यते, अधिष्ठानज्ञाननाश्यत्वात् । अत एवैकविज्ञानेन सर्वविज्ञानं श्रुतावुक्तं कथं संगच्छत इति साश्चर्यमाह—कथमिवेति । अथ वा, विवर्तवादं वेदान्तिसंमतं परिणामवादी तान्त्रिको दूषयति—कथमिवेति । तन्मते मृद्घटादिदृष्टान्तानुपपत्तिरित्यर्थः । अत्रेयं तान्त्रिकप्रक्रिया—'इच्छामि,' 'जानामि' इत्यादावुत्तमपुरुषान्तर्भासमानं स्फुरणान्वयि ज्ञानमेव प्रकाशाभिधं ब्रह्म । तच्च सर्वज्ञत्वसर्वेश्वरत्वसर्वकर्तृत्वपूर्णत्वव्यापकत्वादिशक्तिसंवलितम् । तस्य चानन्दरूपांश एव स्फुरणं परा ऽहंता, विमर्शः, परा ललिता भट्टारिका, त्रिपुरसुन्दरीत्यादिपदैर्व्यवह्रियते । उक्तं च विरूपाक्षपञ्चाशिकायां विश्वशरीरस्कन्धे—'ईश्वरता कर्तृत्वं स्वतन्त्रता

चित्स्वरूपता चेति। [1]'एते ऽहंतायाः किल पर्यायाः सद्भिरुच्यन्ते ॥' इति। पराहंतामन्तरेणेदंताया असंस्फुरणादहमिदमोः ससंबन्धिकत्वादिदंपदगम्यस्य दृश्यस्याहंतारूपशक्त्या तद्विशिष्टब्रह्मणा वा जन्यत्वम्। तच्च दृश्यं तत्परिणाम एव, 'तस्यां परिणतायां तु न कश्चित्पर इष्यते' इति वामकेश्वरतन्त्रात्, 'वाचाऽऽरम्भणं विकारः' (छा० उ० ६-१-४) इत्यादिश्रुतीनां तत्रैव स्वारस्याच्च। शक्तिशक्तिमतोरुपादानोपादेययोरत्यन्तमभेदः, न पुनरौपनिषदादिवद्भेदाभेदौ। अत एव 'सर्वं खल्विदं ब्रह्म' (छा० उ० ३-१४-१) इति सामानाधिकरण्यमभेदे, न पुनर्बाधायाम्। अद्वैतश्रुतयः सर्वा अप्येतदभिप्रायिका एवाविरुद्धाः। सर्वप्रमाणमूर्धन्यया श्रुत्या तदनुसारितन्त्रैश्चाद्वैते कथिते, तद्विरुद्धत्वेन भासमानः कार्यकारणयोर्भेदांश एव कल्पित आस्तां न पुनः सर्वोऽपि प्रपञ्चः। 'नेह नाना ऽस्ति किंचन' (बृ० उ० ४-४-१९) इत्यादिश्रुतिष्वपि भेदांशस्यैव निषेधो न प्रपञ्चस्य। 'एकमेवाद्वितीयम्' इत्यादौ श्रूयमाणो भेदवत्प्रपञ्चाभावो ऽपि विशेषणाभावप्रयुक्त एव। अत एव भामत्यां हाटकमकुटग्रन्थे भेदस्यैव हाटकन्यूनसत्ताकत्वं न मकुटस्योक्तम्, परिणामस्य परिणामिसमानसत्ताकत्वावश्यिकत्वात्। 'मायामात्रमिदं द्वैतम्' (गौड० १-१७) इत्यत्रापि द्वैतशब्देन भेदस्यैव मिथ्यात्वमुच्यते, न पुनर्भेदवतः; तथात्वे तु प्रतियोगितासंबन्धेन जगत इवानुयोगितासंबन्धेन ब्रह्मणो ऽपि भेदवत्त्वस्य सत्त्वात्सदसद्भ्यामभावो निरूप्यत इति न्यायसिद्धत्वाविशेषान्मिथ्यात्वापत्तेः। ततश्च श्रुतेरपि परिणामवाद एव संमतः सिध्यति। भगवता व्यासेनापि 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' (ब्र०सू० १-४-१३) इत्यस्मिन्नधिकरण एकविज्ञानेन सर्वविज्ञानप्रतिज्ञां मृद्घटनखनिकृन्तनादिदृष्टान्तम् 'बहु स्यां प्रजायेय' (तै० उ० २-७)

[1] एते चाहंतायाः

इत्यभिध्योपदेशादिकं चानुसंदधानेन परिणामवाद एवाभिप्रेतः. कण्ठरवेणोक्तश्च 'आत्मकृतेः परिणामात्' (ब्र० सू० १-४-२६) इति सूत्रे। भाष्यकारैरपि तत्र विवर्तवादानुसारेण व्याचक्षाणैरपि सौन्दर्यलहर्याम् 'मनस्त्वं व्योम त्वम्—' (३५) इति श्लोके 'त्वयि परिणतायाम्' इति स्वाभिमतः परिणामवाद एव स्फुटीकृतः। अस्मिन्पक्षे रहस्यनामसहस्रे 'मिथ्याजगदधिष्ठाना' (७३५) इत्यादौ श्रूयमाणं मिथ्यात्वं तु स्वानतिरिक्तरूपत्वम्, घटादिरूपेणानित्यत्वं ब्रह्मरूपेण नित्यत्वम्, मृद्घटयोरभेदेऽपि घटरूपेण ध्वस्तत्वं मृद्रूपेणाध्वस्तत्वं चेत्यादिवद्विरुद्धधर्मनिरासादिकमूह्यमित्यादिकः शांभवानन्दकल्पलतायां विस्तरः ॥ ३ ॥

That Great Radiance triumphs, at the sight whereof whatsoever else is not seen. While so, how is it said in the Veda-s that all is known on Its being known! (3)

इममेवार्थं श्लोकद्वयेनाह—

**नैसर्गिकी स्फुरत्ता विमर्शरूपाऽस्य वर्तते शक्तिः।**
**तद्योगादेव शिवो जगदुत्पादयति पाति संहरति ॥ ४ ॥**

इहोत्पादनादि त्रयं तिरोधानानुग्रहयोरुपलक्षणम् ॥ ४ ॥

It has the S'akti (Power) of Vimars'a which may be defined as inherent throbbing. It is in conjunction with S'akti that S'iva creates, sustains and destroys the world. (4)

सा ऽवश्यं ा यत्परिणामादभूदेषा ।
अर्थमयी शब्दमयी चक्रमयी देहमय्यपि च सृष्टिः ॥ ५ ॥

अवश्यम्, सर्वविज्ञानसाधनत्वान्मोक्षादिपुरुषार्थप्रदत्वाच्च । अर्थमयी शिवादिक्षित्यन्तषट्त्रिंशत्तत्त्वरूपा । शब्दमयी पराऽऽदिवैखर्यन्ता । चक्रमयी बिन्द्वादिभूगृहान्ता । देहमयी सूक्ष्मादिस्थूलान्ता ॥ ५ ॥

She (S'akti) by whose transformation this creation in the form of Artha-s (objects), S'abda-s (words), Cakra-s (plexuses) and Deha-s (bodies) exists, should by all means be unravelled by us. (5)

तज्ज्ञानार्थमुपाया विद्या लोके चतुर्दश प्रोक्ताः ।
[1]तेष्वपि च सारभूता वेदास्तत्रापि गायत्री ॥ ६ ॥

चतुर्दश विद्याः—चत्वारो वेदाः षडङ्गानि न्यायो मीमांसा पुराणं धर्मशास्त्रं चेति । तन्त्राणां धर्मशास्त्रे ऽन्तर्भावः । तेषां प्रामाण्यसमर्थनं [2]त्वस्मदीये त्रिपुरसुन्दरीबाह्यवरिवस्याविधौ द्रष्टव्यम् । तन्त्रराजव्याख्याने च विस्तरेण तन्त्राणां धर्मशास्त्रे ऽन्तर्भावः प्रपञ्चयिष्यते । एवं च न शिष्टाकोपाधिकरणस्थवार्त्तिकविरोधः, शास्त्रपरिमाणानतिक्रमात् ॥ ६ ॥

The fourteen Vidyā-s are the expedients to be employed by us in this world to understand Her aright. Even among them the most essential are the Veda-s and therein especially the Gāyat-trī. (6)

[1] तास्वपि.

[2] चास्मदीये.

**तस्या रूपद्वितयं तत्रैकं यत्प्रपठ्यते (ऽ)स्पष्टम् ।**
**वेदेषु चतुर्ष्वपि परमत्यन्तं गोपनीयतरम् ॥ ७ ॥**

तस्या गायत्र्याः । स्पष्टमस्पष्टं चेति पदच्छेद आवृत्त्या । चरणत्रयम् 'तत्सवितुः' इत्यादि स्पष्टम् । 'परोरजसे सावदोम्' इति चतुर्थचरणं त्वस्पष्टमित्यर्थः । परं श्रीविद्याऽऽख्यं द्वितीयं रूपम् ॥ ७ ॥

She (Gāyat-trī) is of two forms: one of them, clear, being what is recited in the four Veda-s; the other (S'rī-vidyā), not clear, being very much esoteric. (7)

यद्यपि तन्त्रराजादौ सौन्दर्यलहर्यां च हादिविद्याया एव प्रथममुद्धारो दृश्यते, तथा ऽपि 'श्रीविद्यैव तु मन्त्राणां तत्र कादिर्यथा परा' इति वचनात्, षोडशीघटकत्वाच्च, 'यदक्षरैकमात्रे ऽपि,' 'यदेकादशमाधारम्' इत्यादिरहस्यार्थप्रतिपाद्यक्षरशालित्वाच्च, त्रिशत्यामस्या एवादराच्च, त्रिपुरोपनिषद्येतन्मूलकत्वेनैवान्यासामुद्धाराच्च, योगिनीहृदयादावुक्तानामिहापि वक्ष्यमाणानामर्थानामत्रैव स्वारस्याच्च, शाङ्खायनश्रुतौ 'चत्वार ईं बिभ्रति' इत्यस्यामृचि च प्रथममस्या एवोद्धाराच्च कादिविद्यायाः प्राधान्यमिति [1]द्योतयंस्तस्याः प्रतीकमादत्ते—

**कामो योनिः कमलेत्येवं [2]सांकेतिकैः शब्दैः ।**
**व्यवहरति न तु प्रकटं यां विद्यां वेदपुरुषो ऽपि ॥ ८ ॥**

[1] द्योतयन्नस्याः

[2] संकेतितैः

'कामो योनिः कमला वज्रपाणिर्गुहाहसा मातरिश्वा ऽभ्रमिन्द्रः । पुनर्गुहासकला मायया च पुरूच्येषा विश्वमाता ऽऽदिविद्या ॥' इति शाङ्खायनश्रुतिः । कामो मातरिश्वा च ककारः । योनिर्ग्कारः । कमला तुरीयः स्वरः । वज्रपाणिरिन्द्रश्च लकारः । गुहाद्वयं माया च लज्जाबीजम् । हसेति सकलेति च स्वरूपम् । गुहया सह समासाद्बहुवचनं न पुनः सकारो दीर्घः । एवं लकारो ऽपि । अभ्रं हकारः । एतादृशैः [1]सांकेतिकैः शब्दैर्व्यवहारादत्यन्तगोपनीयत्वं समर्थितं भवति ॥ ८ ॥

Even the Veda-puruṣa talks of such Vidyā in such conventional terms as *Kāmo yoniḥ kamalā*, *etc.* and not explicitly. (8)

विद्यावर्णानुद्धरति—

**क्रोधीशः श्रीकण्ठारूढः कोणत्रयं लक्ष्मीः ।**
**मांसमनुत्तररूढं वाग्भवकूटं प्रकीर्तितं प्रथमम् ॥ ९ ॥**
**शिवहंसब्रह्मवियच्छक्राः प्रत्येकमक्षरारूढाः ।**
**द्वैतीयीकं कूटं कथितं तत्कामराजाख्यम् ॥ १० ॥**
**शिवतो वियतो मुक्तं तृतीयमिदमेव शक्तिकूटाख्यम् ।**
**हृल्लेखानां त्रितयं [2]कूटत्रितये ऽपि योज्यमन्ते स्यात् ॥ ११ ॥**

क्रोधीशो ब्रह्मा च ककारः । श्रीकण्ठो ऽनुत्तरमक्षरं चाकारः । तमारूढस्तेन युक्तः । कोणत्रयं योनिः । लक्ष्मीः कमला । मांसं शक्रश्चेन्द्रः ।

[1] संकेतितैः

[2] कूटत्रितयस्य.

शिवो वियच्च हकारः । हंसः मकारः अक्षरसमूहात्मकत्वात्कूटत्व-
व्यपदेशः ॥ ९—११ ॥

Krodhīs'a (*K*) along with S'rī-kāṇṭha (*a*), Koṇa-traya, *i.e.*, triangle (*E*), Lakṣmī (*Ī*), Māṃsa (*L*) along with An-uttara (*a*), constitute the first Group known as Vāg-bhava-kūṭa. (9)

S'iva (*H*), Haṃsa (*S*), Brahman (*K*), Viyat (*H*), S'akra (*L*), these severally conjoined with Akṣara (*a*), constitute the second Group known as Kāma-rāja-kūṭa. (10)

The selfsame Group, rid of S'iva (*Ha*) and Viyat (*Ha*), constitutes the third one known as S'akti-kūṭa. At the end of these three Groups should be added three Hṛl-lekhā-s (one in each). (11)

**हृल्लेखायाः स्वरूपं तु व्योमाग्निर्वामलोचना[1] ।**
**बिन्द्वर्धचन्द्ररोधिन्यो नादनादान्तशक्तयः ॥ १२ ॥**
**व्यापिकासमनोन्मन्य इति द्वादशसंहतिः ।**
**बिन्द्वादीनां नवानां तु समष्टिर्नाद उच्यते ॥ १३ ॥**

व्योम हकारः केवलो न त्वकारविशिष्टः । अग्नी रेफस्तादृशः । [2]वामलोचनेकारः । बिन्द्वादयो नवापि सूक्ष्मसूक्ष्मतरसूक्ष्मतमकालैरुच्चार्या ध्वनिविशेषाः, वर्णविशेषा वा । न च ककारादिवत्स्पष्टमनुच्चार्यत्वात्तन्त्री-

[1] वामलोचनम्.
[2] वामलोचनमीकारः

स्वरतुल्यत्वेन श्रूयमाणत्वाच्च कारप्रत्ययाद्यभावाच्च 'बीजबिन्दुध्वनीनां च त्रिकूटेषु ग्रहात्मिका' इत्यादौ ध्वनिपदेनैव तन्त्रेषु व्यवहाराच्च न वर्णत्वमर्धचन्द्रादेरिति वाच्यम्, अनुस्वारविसर्गादावुक्तहेतुसत्त्वे ऽपि वर्णत्वस्येष्टत्वात्। कथमन्यथा 'त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शंभुमते मताः' (पा०शि० ३) इति प्रतिज्ञाय 'अनुस्वारो विसर्गश्च—' इति परिगणनं शिक्षायां संगच्छेत? न च तादृशसंख्याविरोधादेव नात्र वर्णत्वम्, तत्र स्पष्टोच्चार्याणामेव गणनात्। न च ताल्वादिपरिगणितस्थानानभिव्यङ्ग्यत्वान्न वर्णत्वम्, तदनभिव्यङ्ग्यत्वस्य पश्यन्त्यादावव्याप्तेः, 'चत्वारि वाक्परिमिता पदानि' (ऋ० २-३-२२) इति श्रुत्या वर्णसमूहात्मकपदत्वस्य स्पष्टमुक्तत्वाच्च। अत एव चतुःशतीशास्त्रे नादस्यार्थवर्णनं संगच्छते। न च रथघोषवत्पदार्थस्मारकत्वोपपत्तिः; तत्र हि तत्कालकरणीयत्वसंबन्धेन माहेन्द्रस्तोत्रोपाकरणस्य स्मृतिविषयताया वाचनिकत्वेन रथघोषसामान्यस्य लौकिकादिसाधारणस्य स्मारकत्वाभावेन तस्य तत्र शक्तेरयोगात्, प्रकृते तु न तथेति वैषम्यात्; 'हृल्लेखात्रयसंभूतैस्तिथिसंख्यैस्तथा ऽक्षरैः' इत्यादौ प्रतिहृल्लेखं हकाररेफेकारानुस्वारनादपञ्चकमिति पञ्चदशाक्षराणीत्युक्त्या, नादे ऽक्षरत्वव्यवहारस्यासकृद्योगिनीहृदये 'भूमिश्चन्द्रः शिवो माया शक्तिः कृष्णाध्वमादनौ। अर्धचन्द्रश्च बिन्दुश्च नवार्णो मेरुरुच्यते। महात्रिपुरसुन्दर्या मन्त्रा मेरुसमुद्भवाः॥' इति ज्ञानार्णवादावप्यसकृद्व्यवहारस्य दर्शनाच्च। ध्वनिपदेन व्यवहारस्तु तत्तुल्यत्वाल्लक्षणया ध्वनिपर्यायनादपदवाच्यत्वान्नेयार्थरूपलक्षणया वा नेय इति दिक्। एवं च प्रथमतृतीयकूटे अष्टादशवर्णात्मके; [1]मध्यमकूटं तु चतुरधिकम्; संहत्याष्टपञ्चाशद्वर्णात्मिका विद्येति सिद्धम्। यद्यपि बिन्दुविनिर्मुक्तानामष्टानामेव नादसंज्ञा मन्त्रशास्त्रे,

[1] मध्यकूटं.

तथा ऽपि व्यवहारसौकर्याय तत्सहितानामेव सा ऽत्र कृतेति ध्येयम् ॥ १२, १३ ॥

The form of Hṛl-lekhā is made up of the twelve letters—Vyoman (*H*), Agni (*r*), Vāma-locanā (*ī*), Bindu (*ṃ*), Ardha-candra, Rodhinī, Nāda, Nādānta, S'akti, Vyāpikā, Sa-manā and Un-manī. The Samaṣṭi (aggregate) of the nine beginning with Bindu is known as Nāda. (12, 13)

सिद्धमवाह—

प्रथमे ऽष्टादश वर्णा द्वाविंशतिरक्षराणि मध्ये स्युः ।
प्रथमेन तुल्यमन्त्यं संघातेनाष्टपञ्चाशत् ॥ १४ ॥

In the first Group there are eighteen letters; in the middle Group there are twenty-two letters; the last Group is similar to the first; thus there are in the aggregate fifty-eight. (14)

वर्णानां कालानाह—

मात्राद्वितयोच्चार्या कामकला च त्रिकोणा च ।
बिन्दुरहितहृल्लेखा मात्राकालत्रयोच्चार्याः ॥ १५ ॥
अन्येषां वर्णानां मात्राकालो ऽर्धमात्रया सहितः ।
बिन्दोरर्धं मात्रा परे परे चापि पूर्वपूर्वार्धाः ॥ १६ ॥
संहत्यैकलवोनो मात्राकालो ऽस्य नादस्य ।

मात्रा लघ्वक्षरस्य कालः। तद्द्विगुणा गुर्वक्षरस्य। अत एव कामकला कमला त्रिकोणा योनिश्च द्विमात्रा। हृल्लेखायां द्वयोर्व्यञ्जनयोरेका मात्रा, कामकलाया द्वे मात्रे इति तिस्रः। अन्येषामकारसहितानां [1]ककारादिदशवर्णानाम्। विन्दोरपि व्यञ्जनत्वादर्धा मात्रा, 'एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते। त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं त्वर्धमात्रकम्॥' इति वचनात्। परे परे, अर्धचन्द्ररोधिन्यादयः, पूर्वपूर्वार्धाः; अर्धचन्द्रस्यार्धकालो रोधिन्याः, रोधिन्यर्धकालो नादस्येत्यादिक्रमेण कालवन्तः। अयं भावः—कालपरमाणुर्लव इत्युच्यते, 'नलिनीपत्रसंहत्याः सूक्ष्मसूच्यभिवेधने। दले दले तु यः कालः स कालो लवसंज्ञितः। अतः सूक्ष्मतमः कालो नोपलभ्यो भृगूद्वह॥' इति वचनात्। षट्पञ्चाशदुत्तरशतद्वयलवैरेका मात्रा। विन्दोरष्टाविंशत्युत्तरशतं लवाः। अर्धचन्द्रस्य चतुःषष्टिः। रोधिन्या द्वात्रिंशत्। नादस्य षोडश। नादान्तस्याष्टौ। शक्तेश्चत्वारः। व्यापिकाया द्वौ लवौ। समनाया एको लवः। उन्मनायास्तु नास्त्येव कालः। यद्यपि योगिनीहृदये चक्रसंकेते 'दीपाकारो ऽर्धमात्रश्च' इत्यनेन विन्दोः कालमुक्त्वा ऽर्धचन्द्रादेः शक्तिपर्यन्तस्य चतुरंशाष्टांशषोडशांशादिरूपभागत्रैगुण्यं कालस्योक्त्वा शक्त्यादीनां पूर्वपूर्वद्विगुणांशकालवत्त्वं सामान्येनोक्तम् 'चतुःषष्टिस्तदूर्ध्वं तु द्विगुणं द्विगुणं ततः' इति, तेन च वचनेन मात्राया द्वादशोत्तरपञ्चशततमो भाग उन्मनाकालः, मात्रास्वरूपं च द्वादशोत्तरपञ्चशतलवात्मकत्वमेव प्रतीयते, अत एव 'देशकालानवच्छिन्नं तदूर्ध्वं परमं महत्' इत्युत्तरग्रन्थे ऽप्युन्मनायाः परत एव कालानवच्छेद उक्त इति व्यक्तं प्रतीयते; तथा ऽपि 'चतुःषष्टिः—' इति श्लोकस्य शक्तेश्चतुःषष्टितमो मात्राभागः, तदूर्ध्वं द्विगुणं व्यापिकाया

[1] कादिदश०.

अष्टाविंशत्युत्तरशततमो भागः, ततो द्विगुणं समनायाः षट्पञ्चाशदुत्तर-शतद्वयात्मको भाग [1]इत्यर्थस्ततस्तदूर्ध्वमिति पदाभ्यां द्विगुणपदद्वयेन च स्पष्टं [2]प्रतीयते; अत एवोत्तरार्धे 'शक्त्यादीनां च मात्राऽंशो मनोन्म-न्यास्तथोन्मनी' इत्यत्र मनोन्मनीति पदस्य समनापर्यायस्य समनापर्यन्ताना-मित्यर्थकत्वमङ्गीकृत्य शक्त्यादीनां तिसृणामित्यमृतानन्दैर्व्याख्यातम्। नादस्य बिन्द्वादिनवकस्य ॥ १५–१६- ॥

Kāma-kalā (*Ī*) and Tri-koṇā (*E*) are to be pronounced with two Mātrā-s. Hṛl-lekhā-s devoid of Bindu are to be pronounced with three Mātrā-periods. (15)

In the case of the other letters the period is half a Mātrā added on to a Mātrā (*i.e.*, one and a half Mātrā-s). Bindu's period is half a Mātrā. The others coming thereafter in succession will have one half of the period of the letters immediately preceding each of them. (16)

Computing in the above manner, (it will be found that) this Nāda comes to have one Mātrā less one Lava. (16-)

**एकादश वाक्कूटे सार्धा एकादशोदिता मध्ये ॥ १७ ॥**
**सार्धा अष्टौ शक्तावेकैकलवोनिता मात्राः ।**
**संहत्यैकत्रिंशन्मात्रा मन्त्रे लवत्रयन्यूनाः ॥ १८ ॥**

शक्तौ तृतीयकूटे ॥ १७, १८ ॥

[1] इत्यर्थस्य.
[2] प्रतीतेः

In the Vāk-kūṭa there are eleven Mātrā-s, in the middle one there are eleven and a half, and in the S'akti-kūṭa eight and a half, less one Lava in each case. (Thus) there are, on the whole, thirty-one Mātrā-s less three Lava-s in the Mantra. (-17, 18)

उत्पत्तिस्थानयत्नावाह—

**कण्ठे च कण्ठतालुनि तालुनि दन्तेषु नासायाम्**
**स्पृष्टविवाराद्यान्तरबाह्यैर्यत्नैस्तदक्षरोत्पत्तिः ॥ १९ ॥**

ककारत्रयमकारदशकं हकारपञ्चकं च कण्ठे । द्वितीयमक्षरं कण्ठतालुनि । प्राण्यङ्गत्वादेकवद्भावः । ईकारचतुष्टयं तालुनि । लकारत्रयं सकारद्वयं च दन्तेषु । रेफत्रयं तु मूर्ध्नि । विन्द्वादिनवकत्रयं नासायाम् । स्पृष्टेति । ककाराः स्पृष्टयत्नाः । अकाराः संवृताः । ईकारा एकारश्च विवृताः । रेफा लकाराश्चेषत्स्पृष्टाः । हकाराः सकारौ चेषद्विवृताः । बिन्द्वादयः संवृततमाः । इत्याभ्यन्तरो यत्नः । ककारा विवारश्वासाघोषवन्तो ऽल्पप्राणवन्तश्च । सकारौ महाप्राणवन्तौ विवारादिमन्तौ च । स्वराः सर्वे ऽप्युदात्ताः । रेफा लकाराश्च संवारनादघोषाल्पप्राणवन्तः । हकारास्तु संवारादित्रयवन्तो महाप्राणवन्तश्च । बिन्द्वादयस्त्वात्यन्तिकसंवारादिचतुष्कवन्तः । इति बाह्यः प्रयत्नः ॥ १९ ॥

These letters (of the Mantra) have their origin in the throat, the throat and palate, the palate, the teeth, the roof of the mouth, and the nose, (and are pronounced) with the aid of internal efforts, Spṛṣṭa, etc., and external efforts, Vivāra, etc., as the case may be. (19)

अथ वर्णानां स्थितिस्थानं रूपमाकारं चाह—

**प्रलयाग्निनिभं प्रथमं मूलाधारादनाहतं स्पृशति ।**
**तस्मादाज्ञाचक्रं द्वितीयकूटं तु कोटिसूर्याभम् ॥ २० ॥**
**तस्माल्ललाटमध्यं तार्तीयं कोटिचन्द्राभम् ।**
**मालामणिवद्वर्णाः क्रमेण भाव्या उपर्युपरि ॥ २१ ॥**

मूलाधारादित्यादि पञ्चमीत्रयं ल्यब्लोपे । मूलाधारमारभ्येत्यर्थः । तस्मादनाहतमारभ्य । तस्मादाज्ञाचक्रमारभ्य । इदं च स्थानत्रयं बिन्द्वादिरहितकूटत्रयस्यैव । सुषुम्णाऽऽख्यनाडीमूलाग्रयोर्द्वे सहस्रदलकमले, मध्ये चाष्टदलषड्दलादीनि त्रिंशत्पद्मानि सविस्तरं स्वच्छन्दसंग्रहादौ प्रपञ्चितानि । तत्र गुदोपरि द्व्यङ्गुलोर्ध्वे लिङ्गे नाभौ हृदि कण्ठे भ्रूमध्ये च मूलाधारस्वाधिष्ठानमणिपूरानाहतविशुद्ध्याज्ञानामकानि चतुःषड्दशद्वादशषोडशद्विदलानि द्विद्विग्रन्थिमध्यसंदष्टानि चक्रपदवाच्यान्यपि षट् पद्मानि सन्तीत्यन्यत्र विस्तरः ॥ २०, २१ ॥

The first (Kūṭa), which has the blaze of the diluvian Fire, touches An-āhata, beginning from Mūlādhāra. The second (Kūṭa), which has the brilliance of ten million suns, touches Ājñā-cakra therefrom (from An-āhata). The third (Kūṭa), which has the effulgence of ten million moons, touches Lalāṭa-madhya (the middle of the forehead) thence (from Ājñā-cakra). The letters (constituting the three Kūṭa-s) have to be regarded as so many beads in a Rosary, one above the other. (20, 21)

## आधारोत्थितनादो गुण इव परिभाति वर्णमध्यगतः

अत्रेयं शब्दसृष्टिप्रक्रिया—वटबीजान्तर्गतवटवृक्षीयसूक्ष्मरूपतुल्य-शब्दसृष्टिसूक्ष्मरूपशालिनी पूर्वोक्तरूपा त्रिपुरसुन्दर्येव तादृशसूक्ष्मरूपवत्त्व-प्रवृत्तिनिमित्तकपरापदवाच्या। सैव च माति तरति कायर्तीति च व्युत्पत्त्या मातृकेत्युच्यते। तस्यां च निर्विकारायामप्यनादिसिद्धप्राण्यदृष्टवशात्स्वान्तः-संहृतविश्वसिसृक्षोत्पद्यते। ततः स्रष्टव्यपदार्थानालोचयति, 'तदैक्षत बहु स्यां प्रजायेय' (छा० उ० ६-२-३) इति श्रुतेः। तादृशमीक्षणमेव प्रवृत्तिनिमित्तीकृत्य तस्यां पश्यन्तीति पदं प्रवर्तते। सैव च पश्यन्त्याख्या मातृका करणसरणित उत्तीर्णत्वादुत्तीर्णेत्युच्यते। तदवयवाश्च वामाऽऽदयो ऽष्टौ शक्तयो ऽन्यत्र प्रपञ्चिताः। अतः सैव व्यष्टिसमष्टिवेषेण नवविधा। ततो नव नादा अविकृतशून्यादयो जाताः। तत्समष्टिश्च नादध्वन्यादिपदवाच्या नातिसूक्ष्मा परावन्नातिस्थूला वैखरीवदतो मध्यमाऽऽख्या मातृका मध्यमा-वयवरूपमविकृतशून्यस्पर्शनादध्वनिबिन्दुशक्तिबीजाक्षराख्यं नादनवकं मूला-धारादिषट्के नादे नादान्ते ब्रह्मरन्ध्रे च स्थितम्। नवभिर्नादैरकचटतपय-शळाख्यवर्गनवकवती वैखर्याख्या मातृका जाता, वै निश्चयेन स्पष्टतरत्वात्खं कर्णविवरवर्तिनभोरूपश्रोत्रेन्द्रियं राति गच्छति, तज्जन्यज्ञानविषयो भवतीति व्युत्पत्तेरित्याद्यन्यतो विस्तरः। एवं च ककारादौ कत्वादिवर्णधर्माणां षड्जत्वादिध्वनिधर्माणां चानुभूयमानत्वात्परिणामे परिणामिनो ऽनुस्यूततताया मृद्घटे दर्शनाच्च वर्णेषु नादो ऽनुस्यूतः। तन्तुविशेषजन्यः पटविशेषो वर्ण-कपदवाच्यः। तत्र कप्रत्ययपरित्यागेन प्रयोगस्त्वक्षरवाचकवर्णपदेन श्लेषार्थः। गुण इव वर्णकाख्यपटविशेषोपादानभूततन्तुविशेषवन्मालामण्याधारसूत्रवच्चे-त्यर्थः। वर्णमध्यगत इत्यस्य द्वयोर्वर्णयोर्मध्यभागे वर्णशरीरान्तर्भागे च स्थित इत्यर्थः। अयं भावः—द्वयोर्वर्णयोर्मध्यभागे मणिद्वयमध्यभागस्थशुद्धसूत्र-

वच्छुद्धनादस्य भानम्. वर्णशरीरान्तर्भागे तु पटाभेदेन संवलिततन्तुवद्धटान्तर्मृद्वच्च तत्तद्वर्णाभेदेनैव नादस्य भानम्. न पुनस्तत्र मण्यन्तर्गतसूत्रदृष्टान्तः, तस्य मणितो ऽत्यन्तभिन्नत्वादिति ॥ २१- ॥

Nāda emanating from Mūlādhāra functions as the string passing through the several letters, forming with them a composite whole, even as the threads in a piece of cloth. (21-)

अथावशिष्टस्य बिन्द्वादिनवकस्य स्थितिस्थानरूपाकारानाह—

मध्येफालं बिन्दुर्दीप इवाभाति वर्तुलाकारः ॥ २२ ॥
तदुपरि गतो ऽर्धचन्द्रो ऽन्वर्थः कान्त्या तथा ऽऽकृत्या ।
अथ रोधिनी तदूर्ध्वे त्रिकोणरूपा च चन्द्रिकाकान्तिः ॥
नादस्तु पद्मरागवदण्डद्वयमध्यवर्तिनीव सिरा ।
नादान्तस्तडिदाभः सव्यस्थितबिन्दुयुक्तलाङ्गलवत् ॥ २४ ॥
तिर्यग्बिन्दुद्वितये वामोद्गच्छत्सिराऽऽकृतिः शक्तिः ।
बिन्दूद्गच्छत्त्र्यश्राकारधरा व्यापिका [1]प्रोक्ता ॥ २५ ॥
ऊर्ध्वाधोबिन्दुद्वयसंयुतरेखाऽऽकृतिः समना ।
सैवोर्ध्वबिन्दुहीनोन्मना तदूर्ध्वे महाबिन्दुः ॥ २६ ॥
शक्त्यादीनां तु वपुर्द्वादशरविकान्तिपुञ्जाभम् ।

मध्येफालं फालस्य मध्ये। 'पारे मध्ये षष्ठ्या वा' (२-१-१८) इति समासः। कान्त्या, आकृत्या चान्वर्थः; अर्धचन्द्रवत्कान्तिराकारश्चेत्यर्थः।

[1] कथिता.

अण्डस्थानीयौ द्वौ बिन्दू सिरास्थानीया मध्यरेखा चेति त्रयं संहत्य नादस्याकारः, 'बिन्दुद्वयान्तरे दण्डः शैवरूपो मणिप्रभः' इति चक्रसंकेतोक्तेः। शैवो मुष्कद्वयमध्यवर्तिनी नाडी, मणिः पद्मराग इति तु सांप्रदायिकी व्याख्या। दण्डस्य शैवरूपत्वविशेषणं घनतादार्ढ्ययोर्निरासाय, केशतुल्यपिष्टविकारेषु पायसोपयुक्तेषु शैवपदप्रयोगादित्यपि व्याख्या नातीव विरुद्धा। ऊर्ध्वाग्रं दक्षिणारं लाङ्गलम्, वामभागे बिन्दुरेक इति नादान्ताकारः। विसर्जनीयवदूर्ध्वाधो बिन्दुद्वयमिति भ्रमनिरासायाह—तिर्यगिति। वामाद्वामभागस्थबिन्दुमारभ्योर्ध्वं गच्छन्ती निःसरन्ती या सिरा रेखा तदाकारेत्यर्थः। 'शक्तिर्वामस्थबिन्दूद्यत्सिराऽऽकारा' इति चक्रसंकेते। आर्षत्वात्समस्तस्यापि बिन्दुपदस्य पूर्वपदेन सह बहुव्रीह्यवयवत्वेन, उत्तरपदेन सह पञ्चमीतत्पुरुषावयवत्वेनापि काकाक्षिन्यायेनान्वय इति सांप्रदायिकैर्व्याख्यानात्। उद्यत्पदस्य सामान्यवाचकस्यापि बिन्दूद्यदिति विशेषे लक्षणायां वामस्थाद्बिन्दोरुद्यत्याः सिराया आकारो यस्या इत्येव विगृह्य बिन्दोर्वामस्थत्वविशेषणबलादेव दक्षिणदिग्भागे निःसिराक एको बिन्दुरस्तीति गम्यत इति व्याख्यायां वा न को ऽपि क्लेशः। बिन्दुसंस्पृष्टाग्रकत्रिकोणाकारा व्यापिका। 'बिन्दुद्वयान्तरालस्थऋजुरेखामयी पुनः। समना' इति वचने शक्तिवद्बिन्दुद्वयं तिर्यग्रूपं मा भूदित्यतः संप्रदायमनुसरन्नाह—ऊर्ध्वाध इति। संयुता ऽग्रमूलभागयोः संश्लिष्टा, न त्वस्पृशन्ती स्थिता। इयं च ब्रह्मरन्ध्रसंस्थाना। इयमेव च मनोन्मनीत्यपि व्यवह्रियते। मनसो यथा ऽवस्थितरूपस्यैवाभ्यासविशेषेणैतावत्पर्यन्तवृत्त्युद्गमः सुसाध इत्यतः समनेत्युच्यते। एतदुपरि तु रूपान्तरं प्राप्तस्यैव मनसो धृतिविषयतेत्यत उत्क्रान्तमनस्कत्वादुन्मना। प्रकृतानुपयुक्तमप्युन्मनोपरिस्थानं चक्रराजस्य त्रिविधभावनाऽन्तर्गतनिष्कलभावनायामुपयुक्तत्वेन प्रसङ्गादाह—तदूर्ध्वं महाबिन्दुरिति॥ शक्त्यादीनामिति। समनाऽन्तानां तिसृणामिति संप्रदायः।

'शक्त्यादीनां तिसृणां द्वादशरवितुल्यकान्तयस्तनवः' इति पाठो युक्तः । विन्द्वादिस्वरूपाङ्गविस्तरः स्वच्छन्दसंग्रहे द्रष्टव्यः ॥ -२२—२६- ॥

The Bindu, circular in form, shines forth like a lamp (with its seat) in the middle of the forehead. (-22)

Ardha-candra having its seat just above that, bears a significant name, both in point of brilliance and form (*i.e.*, shines like and assumes the form of the crescent moon). Rodhinī, which is immediately the next, is triangular in shape and has the brightness of moonshine. (23)

Nāda, which resembles the ruby has the appearance of a nerve placed between two eggs (*i.e.*, a vertical line between two zeros). Nādānta has the sheen of lightning and resembles a plough with a Bindu attched to the left. (24)

S'akti resembles a nerve rising out of the left of two juxtaposed Bindu-s. Vyāpikā is said to have the form of a Bindu and a triangle with its apex resting thereon. (25)

Sa-manā has the form of two Bindu-s placed one above the other, with a line connecting them. The same, shorn of the upper Bindu, is Un-manā. Above this lies Mahā-bindu. (26)

The body of S'akti and the (two) others following, has the cumulated brilliance of twelve suns. (26-)

अथ वर्णानामुच्चारणप्रकारमाह—

**इत्येवं वर्णानां स्थानं ज्ञात्वोच्चरेद्यत्नात् ॥ २७ ॥**

नादः प्राथमिकस्तु द्वितीयकूटेन साकमुच्चार्यः ।
द्वैतीयीकं नादं तार्तीयेनोच्चरेन्न पृथक् ॥ २८ ॥
बिन्द्वादिनवकयोस्तु प्राक्तनकूटस्थयोरनयोः ।
संमेलनेन शबलं तार्तीयीकं विभावयेत्कूटम् ॥ २९ ॥
बिन्द्वादिकसमनान्तं क्रमेण तार्तीयमुच्चरेन्नादम् ।
उन्मन्यन्तर्लीनं विभावयेदेतदुच्चरणम् ॥ ३० ॥

स्थानं कण्ठाद्युत्पत्तिस्थानं मूलाधारादि स्थितिस्थानं च । यत्ना-दान्तरबाह्ययत्नपूर्वकम् । इदं च मानसजपातिरिक्तविषयम् । तत्र तत्तत्स्थान-यत्नविभावनमात्रस्योपयोग इति द्रष्टव्यम् । नादो बिन्द्वादिनवकम् । पूर्व-पूर्वकूटस्थनादस्योत्तरोत्तरकूटोच्चारणेनैवोच्चरितप्रायत्वान्न तत्र पार्थक्येन यत्नः कालविलम्बो वा कार्य इत्यर्थः । तृतीयकूटे तूत्तरकूटाभावात्तदुभयमपेक्षित-मित्याह—बिन्द्वादिकेति ॥ -२७—३० ॥

Having in this manner ascertained the places of (origin of and seats assumed by) the letters, one should pronounce them with the aid of the efforts (external and internal mentioned above). (-27)

The Nāda of the first Group should be pronounced immediately with the second Group. So also, one should deal with the Nāda of the second Group along with the third Group and not separately. (28)

One should construe the third Group as being variegated by a conglomeration of the nine (letters) beginning with Bindu of the first two Groups. (29)

One should pronounce the Nāda of the third Group beginning from Bindu and ending with Sa-manā

in the order of sequence and construe the same as having merged in Un-manī. This is (the procedure to be adopted for) pronunciation. (30)

पूर्वं विद्यास्वरूपस्य काल उक्तः, इदानीमुच्चारणकालं निष्कृष्याह—

**आद्ये दश मध्ये ताः सार्धास्तार्तीयकूटे ऽष्टौ ।**
**एकलवोना ऊनत्रिंशन्मात्रा मनोर्जपे कालः ॥ ३१ ॥**

आद्ये कूटे दश मात्राः । मध्ये कामराजकूटे ता दश सार्धा मात्राः । तार्तीयकूटे ऽष्टाविति । अस्य पूर्वपरवर्ति पदद्वयं काकाक्षिन्यायेन द्विर्द्विरन्वयितव्यम् । तेनैकलवोनाः सार्धा अष्टौ मात्रास्तृतीयकूटे यथा-पूर्वमवस्थिता इत्यर्थः । संहत्य त्वाह—एकलवोना इति । ऊनत्रिंशदेकोन-त्रिंशत् । जपे वाचिके । न तु मानसे पूर्वोक्तकालादयः । प्रथमद्वि-तीयकूटस्थास्तु यत्र न्यासादौ संध्याऽङ्गभूतैकैककूटमात्रजपे च प्रातिस्विक-मुच्चारणेन कूटानां विनियोगविधिस्तत्रैव सार्थका इति विज्ञेयम् ॥ ३१ ॥

There are ten (Mātrā-s) in the first Group, the same number in the middle with the addition of a half, and eight with the addition of a half less one Lava in the third Group, making in all twenty-nine (Mātrā-s) minus one Lava, which is the period for the Japa (Pronunciation) of the Mantra. (31)

अथ कूटानां व्यष्टिसमष्टिभेदेन चतुर्धा भिन्नानां स्वरूपविशेषानाह—

**व्यष्टिसमष्टिविभेदादस्यां चत्वारि बीजानि ।**
**सृष्टिस्थितिसंहारानाख्यारूपाणि भावनीयानि ॥ ३२ ॥**

पुटधामतत्त्वपीठान्वयलिङ्गकमातृतत्समष्टीनाम् ।
रूपान्तराणि बीजान्यमूनि चत्वारि चिन्तनीयानि ॥ ३३ ॥

अनाख्या तिरोधानानुग्रहयोः समष्टिः, कृत्यपञ्चकेष्वप्यौदासीन्यावलम्बनरूपावस्थानविशेषो वा । पुटादिषट्कं धामसप्तकं च त्रित्रिरूपं पृथक्पृथक् , तत्समष्टिरेकैकेत्येवं चत्वारि चत्वारि । यथा—पुटानि ज्ञातृज्ञानज्ञेयानि तत्सामरस्यं च । धामानि चक्रनाथदशाशक्तित्रयात्मरूपाणि सप्त । तत्र चक्राण्यग्निचक्रसूर्यचक्रसोमचक्राणि ब्रह्मचक्रं च । नाथा मित्रेशनाथषष्ठीशनाथोड्डीशनाथाश्चर्यानन्दनाथश्च । दशा जाग्रत्स्वप्नसुषुप्तयस्तुरीया[1] च । शक्तयः—वामाज्येष्ठारौद्र्यः शान्ता च; इच्छाज्ञानक्रिया अम्बिका च; कामेश्वरीवज्रेश्वरीभगमालिन्यो महात्रिपुरसुन्दरी च । आत्मान आत्मान्तरात्मपरमात्मानो ज्ञानात्मा च । तत्त्वान्यात्मतत्त्वविद्यातत्त्वशिवतत्त्वानि सर्वतत्त्वं च । पीठानि कामरूपपूर्णगिरिजालंधराण्योड्याणपीठं च । अन्वयाः प्राग्दक्षिणपश्चिमान्वया उत्तरान्वयश्च । एत एव समयपदेनाम्नायपदेन च कथ्यन्ते । लिङ्गानि स्वयंभूबाणेतराणि परं च । मातृकाः पश्यन्तीमध्यमावैखर्यः परा च । धामपदार्थत्वेनोक्तं शक्तित्रयं मातृपदस्य वाऽर्थः ॥ ३२, ३३ ॥

In this (Vidyā) by treating (the three Groups) severally and conjointly may be construed the four Bīja-s which take the forms of Creation, Preservation, Destruction and An-ākhyā (the nameless one). (32)

These four Bīja-s may similarly be construed as assuming four different forms by being treated severally

[1] ०स्तुर्या.

and conjointly in each of the following cases: Puṭa, Dhāman, Tattva, Pīṭha, Anvaya, Liṅga and Mātṛkā. (33)

अथ प्रत्यक्षरं स्वरूपमाह—

**एकैकस्मिन्कर्मणि सृष्ट्यादिविभेदतस्त्रिविधे ।**
**ब्रह्माद्या अधिपतयो भारत्यादिस्वशक्तिभिः सहिताः ॥३४॥**
**ब्रह्मादयस्त्रयो ऽमी भारत्याद्याश्च शक्तयस्तिस्रः ।**
**प्रत्यक्षरस्वरूपाः शाक्तार्थे वक्ष्यमाणया रीत्या ॥ ३५ ॥**

सृष्टिकर्म त्रिविधं सृष्टिसृष्टिः सृष्टिस्थितिः सृष्टिसंहृतिश्चेति । एवं स्थितिकर्म स्थितिसृष्टिः स्थितिस्थितिः स्थितिसंहृतिश्चेति । एवं संहृतिकर्मापि संहृतिसृष्टिः संहृतिस्थितिः संहृतिसंहृतिश्चेति । अत्र प्रतित्रिकं [1]ब्रह्मादयस्त्रयो ब्रह्मविष्णुरुद्रा भारतीपृथिवीरुद्राणीसहिता अधिपतयः । एवं च प्रथमकूटे—ककारो ब्रह्मण एव रूपान्तरम्, त्रिकोणा तु भारतीस्वरूपा, तुर्यः स्वरो विष्णुस्वरूपः, लकारः पृथिवीस्वरूपः, हकारो रुद्रस्वरूपः, रेफो रुद्राणीस्वरूपः, तुर्यः स्वरस्तु शान्ताऽम्बिकात्मकमिथुनस्वरूपः । द्वितीयकूटे मध्यमहकारं परित्यज्यावशिष्टाक्षरेष्वेषैव रीतिः । तृतीयकूटे तु द्वितीयकूटस्थपरित्यक्तहकारस्य ब्रह्मस्वरूपत्वाद्भारतीमारभ्यैव सकारेणारम्भः । शक्तिकूटत्वेन शक्तेः प्राधान्येन प्रथमं निर्देशः । तदेतदाह—शाक्तार्थे वक्ष्यमाणयेति ॥ ३४, ३५ ॥

The Trinity consisting of Brahman, etc., with their S'akti-s, Bhāratī, etc., form the presiding Deities

[1] ब्रह्माद्यास्त्रयो.

over the threefold aspects of every action comprised in Creation, etc. (34)

These three Deities, Brahman, etc., and their S'akti-s, Bhāratī, etc., signify the several letters of the Mantra, in the manner to be hereinafter described in the S'āktārtha. (35)

अथावशिष्टानां बिन्द्वादीनां स्वरूपमाह—

**हृल्लेखाकामकलासपरार्धकलाऽऽख्यकुण्डलिन्युत्थाः ।**
**नादाश्चक्रत्रितयत्रितयात्मानो [1]विभावनीयाः स्युः ॥ ३६ ॥**

अत्र प्रथमकूटे या हृल्लेखा, तदन्तर्गता या कामकला, तस्यां गुरुमुखैकवेद्या या सपरार्धकला, सा वह्निकुण्डलिनीत्युच्यते । सैव द्वितीयकूटे सूर्यकुण्डलिनीति, तृतीयकूटे सोमकुण्डलिनीति च कथ्यते । बिन्द्वादिसमष्टिरूपो नादस्तु तत एवोत्पन्नो दीपशिखाऽग्रवर्तिकज्जललेखावत् । एवं चानाहतमारभ्योत्थितो नादस्त्रैलोक्यमोहनसर्वाशापरिपूरकसर्वसंक्षोभणचक्रत्रयस्य त्रिविधसृष्टिरूपस्यापरं रूपम्; भ्रूमध्यमारभ्योत्थितो नादः सर्वसौभाग्यदायकसर्वार्थसाधकसर्वरक्षाकरचक्रत्रयस्य त्रिविधस्थितिरूपस्यापरं रूपम्; बिन्दुस्थानमारभ्योत्थितो नादः सर्वरोगहरसर्वसिद्धिप्रदसर्वानन्दमयचक्रत्रयस्य [2]संहृतित्रयरूपस्यापरं रूपमिति विभावनीयाः ॥ ३६ ॥

The Nāda-s which emanate from the (three) Kuṇḍalinī-s which are otherwise known as Sa-parārdha-kalā-s of the Kāma-kalā-s (ई) contained in the Hṛl-

[2] विभाव्याः

[1] संहृतिरूप-

lekhā-s (*Hrīṃ*) (of the three Groups) should be construed as the three triads of Cakra-s. (36)

अथावस्थापञ्चकं शून्यषट्कं विषुवत्सप्तकं च जपकाले विभाव्यमाह— इन्द्रियदशकेत्यादिना, एवमवस्थेत्यन्तेन श्लोकषोडशकेन ।

**इन्द्रियदशकव्यवहृतिरूपा या जागरावस्था ।**
**तत्र प्रकाशरूपो हेतुर्भाव्यस्तृतीयगे रेफे ॥ ३७ ॥**

कर्मेन्द्रियाणि पञ्च वाक्पाणिपादपायूपस्थानि ; ज्ञानेन्द्रियाण्यपि पञ्च घ्राणरसनचक्षुस्त्वक्श्रोत्राणि ; एतेषां दशानां स्वस्वविषयोत्पादकत्वं व्यवहारः ; स एव जागरावस्था । तत्र हेतुरूपं ज्ञानमरूपत्वाद्भावनादशायां प्रकाशरूपत्वेन तृतीयकूटस्थरेफस्थाने विभावनीयम् ॥ ३७ ॥

In the Repha (*r*) of the third Group should be construed the Brightness which is the cause of the Jāgara (wakeful) state wherein alone the ten Indriya-s (physical and psychic) function. (37)

**अन्तःकरणचतुष्कव्यवहारः स्वाप्निकावस्था ।**
**सा तार्तीयेकाराद्बोध्या ऽपि गलस्थले चिन्त्या ॥ ३८ ॥**

मनो बुद्धिरहंकारश्चित्तं चेत्यन्तःकरणानि चत्वारि । तैरेव व्यवहारः स्वप्नः । तज्जनकः प्रकाशस्तृतीयहृल्लेखास्थकामकलया[1] बोध्यः । अथापि गलस्थले द्वैतीयीकलकारे चिन्त्यः । गलस्थश्चासौ लश्चेति विग्रहः ॥ ३८ ॥

[1] ०कलाया.

In the *īkāra* of the third Group should be construed the Brightness which is the cause of the Svapna (dreaming) state, wherein the four Antaḥ-karaṇa-s prevail; the Lakāra (*La*) of the second Group should likewise be so construed. (38)

आन्तरवृत्तेर्लयतो लीनप्रायस्य जीवस्य ।
वेदनमेव सुषुप्तिश्चिन्त्या तार्तीयबिन्दौ सा ॥ ३९ ॥

विवरणमत आत्मसुखाज्ञानविषयिकास्तिस्रो ऽविद्यावृत्तयः स्वीकृता इत्यत आह—आन्तरवृत्तेरिति । अन्तःकरणपरिणामरूपवृत्तेरित्यर्थः । वार्त्तिकमते वृत्तिसामान्याभाव एव सुषुप्तिः । तार्तीयविन्दौ ललाटस्थाने ॥३९॥

In the Bindu of the third Group should be construed the sub-conscious state which is the cause of Su-ṣupti (deep slumber), wherein all the Antaḥ-karaṇa-s are in a dormant condition and the Jīva almost so. (39)

तुर्या ऽवस्था चिदभिव्यञ्जकनादस्य वेदनं प्रोक्तम् ।
तद्भावना ऽर्धचन्द्रादिकं त्रयं व्याप्य कर्तव्या ॥ ४० ॥

अर्धचन्द्ररोधिनीनादेषु व्याप्तस्तुर्यावस्थाप्रकाशो भाव्यः ॥ ४० ॥

The state wherein the Nāda brings about absolute Caitanya is known as the Turyā Avasthā, *i.e.*, the fourth state. This should be construed as prevailing in the three letters beginning with Ardha-candra. (40)

**आनन्दैकघनत्वं यद्वाचामपि न गोचरो नृणाम् ।**
**तुर्यातीता ऽवस्था सा नादान्तादिपञ्चके भाव्या ॥ ४१ ॥**

Bliss alone (in its entirety) which is beyond the range of description by men is the Turyātīta (beyond the fourth) state, which is to be construed in the five letters beginning with Nādānta. (41)

अवस्थापञ्चकं निरूप्य शून्यषट्कं निरूपयति—

**तार्तीयीके रेफस्थाने बिन्दौ च रोधिन्याम् ।**
**नादान्तव्यापिकयोश्चन्द्रकतुल्यानि पञ्च शून्यानि ॥ ४२ ॥**
**उन्मन्यां नीरूपं षष्ठं चिन्त्यं महाशून्यम् ।**

चन्द्रको मयूरपिच्छाग्रगतं चन्द्राकारं शून्यम् । तदुक्तं स्वच्छन्द-संग्रहे—' शिखिपक्षचित्ररूपैर्मण्डलैः शून्यपञ्चकम । ध्यायतो ऽनुत्तरे शून्यं परं व्योमतनुर्भवेत् ॥ ' इति । यद्यपि ' अग्न्यादिद्वादशान्तेषु त्रींस्त्रींस्त्यक्त्वा वरानने । शून्यत्रयं विजानीयादेकैकान्तरितं प्रिये । शून्यत्रयात्परे स्थाने महाशून्यं विभावयेत् ॥ ' इति पूजासंकेते रेफादिमहाबिन्द्वन्तेषु द्वादशसु स्थानेषु मध्ये त्रयं त्रयं त्यक्त्वा, एकैकमन्तरितं मध्यस्थितं शून्यत्रयं विजानी-यादित्यर्थादर्धचन्द्रशक्तिमहाबिन्दुषु शून्यत्रयं तदूर्ध्वं चतुर्थमित्यर्थः ; अथ वा, आदावन्ते च त्रयं त्रयं त्यक्त्वा मध्यस्थे ऽर्धचन्द्रादिव्यापिकाऽन्तषट्क एकैकव्यवधानेन शून्यत्रयं तत्परे चतुर्थमित्यर्धचन्द्रनादशक्तिषु त्रीणि शून्यानि व्यापिकायां महाशून्यमिति वा ऽर्थः स्पष्टं प्रतीयते ; तथा ऽपि ' शून्यषट्कं सुरेशानि अवस्थापञ्चकं पुनः । विषुवत्सप्तरूपं च भावयन्मनसा

जपेत ॥' इत्युपक्रमविरोधादन्यथा ऽर्थः । तथा हि—अग्नचार्दीनि भिन्नं पदं शून्यत्रये ऽन्वेति । अन्तशब्दश्चरमावयववाची । अर्थाच्चरमहल्लेखा-संबन्धिषु द्वादशस्ववयवेषु हकाराद्युन्मनाऽन्तेषु, अग्नचादि रेफमारभ्य शून्य-योस्त्रयं शून्यषट्कं विजानीयात । तच्च न रेफादिसांतत्येन, किं त्वेकैकव्य-वधानेनेति । अत आह—एकैकान्तरितमिति । प्रथमशून्यस्य रेफस्था-नीयत्वे कथिते व्यवधानमर्थाद्धकारेकाराधर्चन्द्रनादशक्तिसमनाभिः षड्भिरिति सिध्यति । तदेवाह—त्रींस्त्रीनिति । द्विगुणितांस्त्रींस्त्यक्त्वेत्यर्थः । शून्यत्रयात् शून्ययोस्त्रयस्य, तत्षट्कस्येत्यर्थः । 'सुपां सु—' (७-१-३९) इति सुपो ङस आदादेशः । निर्धारणे षष्ठी । तेषां मध्ये परं चरम उन्मन्यां महाशून्यमिति । एतद्विभावनस्य परमरहस्यत्वादित्थं क्लेशेनोक्तिरित्यन्वयि-तव्यम् ॥ ४२, ४२- ॥

In the Repha, Bindu, Rodhinī, Nādānta and Vyāpikā places of the third Group should be construed five S'ūnya-s (Noughts) of the shape of the crescent in the plumes of the peacock. In Un-manī should be construed a sixth S'ūnya (Nought) which is shapeless and is known as Mahā-s'ūnya. (42, 42-).

क्रमात्प्राप्तानि सप्त विषुवन्त्याह—

## प्राणात्ममानसानां संयोगः प्राणविषुवाख्यः ॥ ४३ ॥

ककारात्मकवायुः प्राणः । आत्मा प्राणा मनश्चेत्येतेषामैक्यं प्राण-विषुवसंज्ञमिति केचित् । यथाश्रुतमन्ये ॥ -४३ ॥

The coalescence of Prāṇa, Ātman and Manas is known as Prāṇa-viṣuva. (-43)

मन्त्रविषुवमाह—

**प्राथमिककूटनादे त्वनाहताद् ब्रह्मरन्ध्रान्ते ।**
**व्यष्टिसमष्टिविभेदाद् बीजचतुष्कस्य च स्वस्य ॥ ४४ ॥**
**ऐक्येन नादमयताविभावनं मन्त्रविषुवाख्यम् ।**

प्राथमिककूटनादे बीजचतुष्कस्यैक्यम्, स्वस्यात्मनस्त्वाधारोत्थित-नादेन सहैक्यं न प्राथमिकेनानाहतादारब्धेन सह, 'आधारोत्थितनादे तु लीनं बुद्ध्वा ऽऽत्मरूपकम् । संयोगेन वियोगेन मन्त्रार्णानां महेश्वरि ॥ अनाहताद्याधारान्तं नादात्मत्वविचिन्तनम् । विषुवम्' इति कादिमतीय-वचनात् । संयोगेन समष्ट्या । वियोगेन व्यष्ट्या । चतुर्विधानामिति शेषः । आधाराणामन्तो ब्रह्मरन्ध्रम् । आधारान्तान्तमिति तन्त्रेणान्तपद-द्वयसत्त्वाद्ब्रह्मरन्ध्रान्तमित्यर्थकत्वेन व्याचक्षते । आ ऽऽधारान्तादित्यर्थक आङ्प्रश्लेषे तु सर्वं सुस्थम् ॥ ४४, ४४- ॥

By coalescing the Nāda of the first Group with the four Bīja-s obtained by the treatment (of the three Groups) severally and jointly, as also by the coalescence of one's Ātman with the Nāda (emanating from Mūlādhāra) and construing them to be Nāda (pervading the plexuses beginning) from An-āhata to Brahma-randhra, what is known as Mantra-viṣuva results. (44, 44-)

नाडीविषुवमाह—

**आधारोत्थितनादस्योच्चाराद्ब्रह्मरन्ध्रान्तम् ॥ ४५ ॥**

षट्चक्राणां ग्रन्थीन्द्वादश भिन्दन्सुषुम्णयैव पथा ।
नाडीनादार्णानां संयोगो नाडिकाविषुवम् ॥ ४६ ॥

मूलाधारादिचक्रषट्कस्याप्यध ऊर्ध्वं चैकैको ग्रन्थिरिति द्वादश ग्रन्थयः । तद्भेदनमार्गेणैव सुषुम्णानाडी मूलाधाराद्ब्रह्मरन्ध्रं व्याप्नोति । तेनैव मार्गेण नादस्य वर्णपङ्क्तेश्च नाडीसंयुक्तत्वेन भावनयोच्चारणं नाडीविषुवमित्यर्थः ॥ -४५, ४६ ॥

By extending the Nāda emanating from Mūlādhāra, so as to pierce the twelve Granthi-s (Knots) of the six Cakra-s (plexuses) through the Suṣumṇā Nāḍī, as far as Brahma-randhra, the coalescence of the resultant Nāḍī, Nāda and Arṇa is known as Nāḍikā-viṣuva. (-45, 46)

प्रशान्तविषुवमाह—

रेफे कामकलाऽर्णे हार्दकलायां च बिन्द्वादौ ।
नादान्तावधि नादः सूक्ष्मतरो जायते तत्र ॥ ४७ ॥
शक्तेर्मध्ये तल्लयचिन्तनमुदितं प्रशान्तविषुवाख्यम् ।

तृतीयकूटस्थरेफादिषु सप्तसु स्थानेष्वाधारादारब्धस्य नादस्य तत्र सूक्ष्मतरतादशा, अभिघातादुत्तरोत्तरक्षणेषु कांस्यतालध्वनिवत् । तस्य शक्तौ लयो भाव्य इत्यर्थः ॥ ४७, ४७- ॥

A very subtle Nāda emanates from pronouncing the letters Repha (*r*), Kāma-kalā (*ī*) and those beginning from Bindu and ending with Nādānta of the Hārda-

kalā (*Hrīṃ*). The construing of the merging of this (very subtle Nāda) with S'akti is known as Pras'ānta-viṣuva. (47, 47-)

शक्तिविषुवमाह—

**शक्त्यन्तर्गतनादं समनायां भावयेल्लीनम् ॥ ४८ ॥**

शक्तिस्थानादूर्ध्वं पुनरुज्जीवितस्य नादस्य सूक्ष्मतमस्य व्यापिकामुल्लङ्घ्य समनायां लयः शक्तिविषुवमित्यर्थः ॥ ४८ ॥

समनोर्ध्वं पुनरुज्जीवितस्यात्यन्तं सूक्ष्मतमस्य नादस्योन्मन्यां लयः कालविषुवमित्याह—

**समनागतमुन्मन्यामेते द्वे शक्तिकालविषुवाख्ये ।**

This Nāda merged with S'akti should again be construed as merged in Sa-manā, which Nāda merged with Sa-manā should likewise be construed as merged in Un-manī. The latter two are respectively styled S'akti-viṣuva and Kāla-viṣuva. (-48, 48-)

तत्त्वविषुवमाह—

**श्रीविद्याकूटावयवेषु ककारादिषून्मनान्तेषु ॥ ४९ ॥**
**अकुलादिकोन्मनाऽन्तप्रदेशसंस्थेषु सकलेषु ।**
**अध्युष्टनिमेषोत्तरसप्तदशाधिकशतत्रयत्रुटिभिः ॥ ५० ॥**
**उच्चरिते नादे सति तस्यान्ते तत्त्ववेदनं भवति ।**
**तदिदं चैतन्याभिव्यक्तिनिदानं तु तत्त्वविषुवाख्यम् ॥५१॥**

उक्तेषु द्वात्रिंशत्पद्मेष्वधस्तनद्वयं चरमं चाकुलपद्मानि । शेषाणि कुलपद्मानि । तेषु यद्यपि मूलाधाराख्यात्कुलपद्मादेव विद्याऽक्षराणामारम्भः, तथा ऽपि चक्रराजस्य सकलाख्यभावनाया अधस्तनसहस्रदलकमलमारभ्यैव 'अकुले विषुसंज्ञे च' इत्यादिना चतुःशत्यामुक्तत्वात्कुला[1]कुलविद्ययोरभेदेन श्रीविद्याया अपि तत आरम्भोक्तिस्तन्त्रेषु । अध्युष्टं सार्धत्रयम् । निमेषो लोचनस्पन्दकालः । तस्य त्रिसहस्रतमो ऽंशस्त्रुटिः, "स्वस्थे नरे समासीने यावत्स्पन्दति लोचनम् । तस्य त्रिंशत्तमो भागस्तत्परः परिकीर्तितः । तत्परस्य शतांशस्तु त्रुटिरित्यभिधीयते ॥' इति वचनात् । एवं च (१०८१७) अयुतोत्तराष्टशतोत्तरसप्तदशत्रुटिपर्यन्तं विद्याऽवयवस्थानसंलग्नतापूर्वकं नादोच्चारणे कृते सति, तत्त्वस्य स्वसंविदभेदस्य बोधो भवति । तदिदमुच्चारणं तत्त्वविषुवम् ॥ -४९—५१ ॥

When Nāda is pronounced, permeating all the parts of the S'rī-vidyā-kūṭa-s beginning from *Kakāra* and ending with Un-manā and having from A-kula to Un-manā for their seats, taking up in all three hundred and seventeen Truṭi-s over and above three and a half Nimeṣa-s, Tattva-jñana is attained at the close. This is the prime factor in the realization of Caitanya and is known as Tattva-viṣuva. (-49—51)

उपसंहारपूर्वकं जपं लक्षयति—

**एवमवस्थाशून्यविषुवन्ति चक्राणि पञ्च षट् सप्त ।**
**नव च मनोरथांश्च स्मरतो ऽर्णोच्चारणं तु जपः ॥ ५२ ॥**

[1] चक्रविद्ययो.

अवस्थाऽऽदिचतुष्टये संख्याचतुष्टयस्य क्रमादन्वयः। नादत्रयस्य चक्रत्रयात्मकत्वभावनं प्रागुक्तम्। चक्रसंकेते त्वन्यदपि त्रयमुक्तम्—चक्रभावनं त्रिविधं सकलं निष्कलं सकलनिष्कलं चेति। अकुलसहस्रारं मूलाधारादिपञ्चकं सूक्ष्मजिह्वा भ्रूमध्यं बिन्दुस्थानं चेति नवसु स्थानेषु त्रैलोक्यमोहनादिचक्रनवकभावनं सकलम्, बिन्द्वाद्युन्मन्यन्तं तद्भावनं द्वितीयम्, महाबिन्दावेव तद्भावनं तृतीयमिति। मनोर्मन्त्रस्यार्थाननुसंदधानस्य विद्याया अर्णानामक्षराणामष्टपञ्चाशतो मध्य आद्यकूटद्वितयबिन्द्वादिनवकद्वयप्रहाणेनावशिष्टानां चत्वारिंशतो ऽक्षराणामुच्चारणं जपो जपपदवाच्यमित्यर्थः ॥ ५२ ॥

Pronouncing the letters fully cognizing the Avasthā-s (states), S'ūnya-s (Noughts), Viṣuvat-s (Coalescences) and Cakra-s (Plexuses) which are respectively five, six, seven and nine in number and also with the knowledge of the true import of the Mantra-s, constitutes (what is known as) Japa. (52)

**भास्कररायेण गुरोः करुणावशातः समुन्मिषिते ।**
**वरिवस्यातिरहस्ये पूर्वांशः पूर्णतामगमत्[1] ॥ ५३ ॥**

Thus comes to a close the first part of Varivasyārahasya brought to light by Bhāskara-rāya with the grace of his Guru. (53)

इति श्रीनृसिंहानन्दनाथचरणाराधकेन भास्कररायापरनाम्ना
भासुरानन्दनाथेनोन्नीते वरिवस्यारहस्ये
तत्प्रकाशे च प्रथमोंशः ।

[1] पूर्णतामापत्.

# द्वितीयोंशः ।

जपलक्षणशरीरघटकत्वेन 'यदधीतमविज्ञातं निगदेनैव शब्द्यते । अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥' इत्यर्थज्ञानरहितशब्दोच्चारणस्य निन्दया पापानुमानाच्चार्थज्ञानमावश्यिकमित्याह—

**नार्थज्ञानविहीनं शब्दस्योच्चारणं फलति ।**
**भस्मनि वह्निविहीने न प्रक्षिप्तं हविर्ज्वलति ॥ ५४ ॥**
**अर्थमजानानानां नानाविधशब्दमात्रपाठवताम् ।**
**उपमेयश्चक्रीवान्मलयजभारस्य वोढैव ॥ ५५ ॥**

[1]चक्रीवान्गर्दभः । यद्यपि 'यथा खरश्चन्दनभारवाही' इति श्रुतौ खरस्यैवोपमानता, तथा ऽपि सादृश्यनिरूपकगुणाधिक्यवत एवोपमानत्वात्तदाधिक्यव्यञ्जनाय प्रतीपालंकार इवोपमानोपमेययोर्व्यत्यासः ॥ ५४, ५५ ॥

Pronunciation without a knowledge of the true import bears little fruit, (even as) the offering thrown over ashes without fire does not burst into flame. (54)

To those who are merely conversant with the recital of the different sounds without a knowledge of

[1] चक्रीवान्रासभः

their meaning may be compared the donkey with a load of sandalwood (grown in the Malaya mountains) on its back. (55)

पुरुषार्थानिच्छद्भिः पुरुषैरर्थाः परिज्ञेयाः ।
अर्थानादरभाजां [1] नैवार्थः प्रत्युतानर्थः ॥ ५६ ॥

एतेनार्थज्ञानस्य नित्यत्वमुक्तं भवति ॥ ५६ ॥

By those men who are in quest of the Puruṣārtha-s (the goals of human desires) should be comprehended the meanings (of the Mantra). To those who ignore the meanings there is no Artha (the attainment of their desire); on the other hand (such ignoring leads to) ruin. (56)

ते चार्थास्तन्त्रोपनिषद्ग्रन्थभेदेन नानाविधाः शिवेनोक्ताः । तांश्च संजिघृक्षुरुद्दिशति—

अथातः पूर्णगायत्र्याः प्रतिपाद्यो ऽर्थ आदिमः ।
भावार्थः संप्रदायार्थो निगर्भार्थस्तुरीयकः ॥ ५७ ॥
कौलिकार्थो रहस्यार्थो महातत्त्वार्थ एव च ।
नामार्थः शब्दरूपार्थश्चार्थो नामैकदेशगः ॥ ५८ ॥
शाक्तार्थः सामरस्यार्थः समस्तसगुणार्थकौ ।
महावाक्यार्थ इत्यर्थाः पञ्चदश्याः स्वसंमिताः ॥ ५९ ॥

[1] नैवार्थाः प्रत्युतानर्थाः

vowels *E* and *Ī* is S'akti. The meaning of the Hṛl-lekhā (*Hrīṃ*) is *Para-Brahman*, the result of the concordance of S'iva and S'akti. (119)

The meaning of every one of the three Kūṭa-s is: '*Brahman* is S'iva and is also S'akti,' owing to the concordance existing between S'iva and S'akti. This is the *Sāma-rasyārtha* of the Vidyā. (120)

अथ समस्तार्थमाह—

**कन दीप्ताविति धातोः प्रकाशकत्वं ककारार्थः ।**
**अध्ययनार्थकतेङः स्यादेकारस्तदीयकरणार्थः ॥ १२१ ॥**
**वर्णद्वयमेलनतः प्रकाशिका बुद्धिरित्यर्थः ।**
**ई व्याप्ताविति धातोस्तस्या व्याप्तिस्तृतीयवर्णार्थः ॥ १२२ ॥**
**तस्य लहर्याधिक्यं तन्निर्माणं मकारार्थः ।**

कन्यते प्रकाश्यते ऽनेनेति कं प्रकाशकम् । बाहुलको नलोपः । औणादिकः 'अमन्ताड् डः' (१११) इति डप्रत्ययो वा । 'इङ् अध्ययने' इति धातुरधिपूर्वो ऽपि प्रकृत आर्षत्वात्तद्विमोकः । अत एवेङः क्विपि कृते, क्वित्वे ऽपि गुणः । विज्वा कार्यः । अधीयते ऽनेनेत्यध्ययनकरणं बुद्धिः । अनयोः कर्मधारयः । असंधिरार्षः । तत ईकारेण षष्ठीतत्पुरुषः । लहरीत्यत्राकारलोपः । 'माङ् माने' इति धातोः क्विपि तल्लोपे 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' (ग-२०३) इति णिचि 'णेरनिटि' (६-४-५१) इति टिलोपे च म् इति सिध्यति । प्रकाशकत्वं सूक्ष्मत्वम् । तथा च सूक्ष्ममतिव्यापनाधिक्यं प्रथमकूटार्थः ॥ १२१, १२२ ॥

*Kakāra* means 'luminosity' as it is derived from the root '*Kan*, to shine'. Derived from the root '*Iṅ*, to study' *Ekāra* means (Buddhi) the instrument of memory. (121)

By the combination of the two letters is meant 'luminous intellect.' Derived from the root '*Ī*, to pervade' the third letter *Ī* means pervading. (122)

Her (Buddhi's) predominance is *LaHrī;* the causing of such predominance is indicated by Makāra (ṃ). (122-)

हन हिंसायामिति हं शौर्यं प्रत्यर्थिहननकरणत्वात् ॥१२३॥
सं भोगसाधनं धनमुपभोगार्थात्स्यतेः सुनोतेर्वा ।
कमु कान्ताविति धातोरिच्छाविषयो ऽङ्गनाऽऽदिः कम् ॥
एषां गमनं प्रापणमोहाङ्-गत्यर्थधातुजन्यं हम् ।
तस्यातिशयो लहरी तत्र श्लिष्टः सवर्णदीर्घेण ॥ १२५ ॥
ईकारस्तस्यार्थः कीर्त्तिः सर्वासु दिक्षु दीप्तत्वात् ।
ई दीप्ताविति धातोर्निर्मितिरनयोर्मकारार्थः ॥ १२६ ॥

हन्यते ऽनेनेति हं शौर्यम् । 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' (६-४-३७) इति नलोपः । 'षो अन्तकर्मणि' इति 'षुञ् अभिषवे' इति वा धातोः करणार्थे डप्रत्यये सम् इति रूपम् । सीयत इति सूयत इति वा सं द्रव्यम् । काम्यत इति कं स्रक्चन्दनवनिताऽऽदिकम् । हसकानां द्वंद्वः । ततो हकारेण प्राप्त्यर्थकेन षष्ठीतत्पुरुषः । ततो लहरीपदेन तत्पुरुषः । तत ईकारेण कीर्त्यर्थकेन द्वंद्वः ।

ततो मकारेण तत्पुरुषः। तथा च शौर्यधनस्त्रीप्राप्त्यतिशयस्य कीर्त्तेश्च निर्माणं द्वितीयकूटार्थः॥ १२३–१२६ ॥

Derived from the root '*Han*, to give pain to' *Ha* means valour, as it is the cause of vanquishing the enemy. (-123)

*Sa* means wealth, which is the aid to enjoyment, as it is derived from the root '*So*, to enjoy' or '*Sū*, to procreate'. *Ka* means women, etc., the objects of desire, as it is derived from the root '*Kam*, to desire'. (124)

*Ha* derived from the root '*Ohāṅ*, to go' means the attainment of these (*viz.*, valour, etc.). The (attainment in) plenty of this is *LaHarī*, with which is combined *ī* by the process of Savarṇa-dīrgha (the lengthening of similar vowels in Saṃdhi). (125)

This *ī* means fame, as it is derived from the root '*Ī*, to shine' and shines in all directions. *ṃ* means the generation of these two *LaHarī* and *Ī*. (126)

तदेव तावद्वदति—

**वाग्भवकूटस्यार्थः सूक्ष्ममतिव्यापनाधिक्यम्।**
**शौर्यधनस्त्रीयशसामाधिक्यं कामराजार्थः॥ १२७ ॥**

स्पष्टम्॥ १२७ ॥

The meaning of the Vāg-bhava-kūṭa is the prevalence in excess of the subtle intellect. The meaning

of Kāma-rāja-kūṭa is the preponderance of valour, wealth, women and fame. (127)

एते सम्यक्कलयति सकला हरतेर्हकारः स्यात् ।
निखिलजगत्संहर्त्रीत्यर्थस्तस्यापि वर्णस्य ॥ १२८ ॥
ईकारः प्रश्लिष्टः सृष्टिस्थितिरूपदीप्तिकर्त्रर्थः ।
यद्वा हृदि खेदहरे प्रकाशते तेन माता ह्रीः ॥ १२९ ॥
सकलान्तेन पदेन ह्रीकारे कर्मधारयः कार्यः ।
तस्य विशेष्यो मः स्यान्नादार्थः संविदर्थो वा ॥ १३० ॥

कूटद्वयस्य द्वंद्वः । एते निर्माणे सम्यक्कलयतीति सकला । मकारलोपः । हरतीति ह । 'ई दीप्तौ' इति धातोः ई दीप्तिः । दीप्तिर्नाम सृष्टिः स्थितिश्च । हकारेकारयोः कर्मधारये यणि कृते ह्रीः सृष्ट्यादिपञ्चकृत्यकर्त्रीत्युपलक्षणविधया ऽर्थः । यद्वा, हरति सर्वं विषयीकरोतीति ह । क्विप् । आगमशास्त्रस्यानित्यत्वात्प्रकृते न तुक् । तच्च दहराकाशम् । तत्र प्रकाशत इति ह्रीः । ह्रीकारान्तपदस्य मकारेण कर्मधारयः । यद्यपि कूटत्रये ऽपि मकारो नास्त्येव, अनुस्वारस्यैव तन्त्रेषूद्धृतत्वात्; तथा ऽपि मकारस्यैव लक्षणवशादनुस्वार इति कूटद्वये सुवचम् । चरमकूटे त्वनुस्वार एव विशेष्यो ऽस्तु । ततश्च, बुद्धिशौर्यधनस्त्रीयशसामाधिक्यकर्तृ निखिलजगत्सृष्ट्यादिकर्तृ दहराकाशवर्ति नादरूपं चिद्रूपं ब्रह्मेति मन्त्रार्थः सिद्धः । अयं चार्थो ब्रह्मसूत्राणां शक्तिपरत्वेन योजनां प्रदर्शयद्भिस्तत्रभवद्भिर्भाष्यकारैर्विस्तरेण निरूपित इह संक्षिप्योक्तः । तत्र क्वचित्क्वचिद्व्याकरणविरोधः प्रतीयते । स च मन्त्रस्य मन्त्रार्थस्य चर्षिप्रोक्तत्वेन प्रामाणिकत्वे सिद्धे

'प्रयोगशरणा वैयाकरणाः' इत्युक्तेरेतदनुसारेणैव व्याकरणलक्षणानां कल्प्यत्वात्परिहार्यः ॥ १२८—१३० ॥

The part *Sa Ka La* (of the third Group) indicates, that which brings about the action (conveyed by the two *Makāra-s* mentioned above). *Hṛ*, which is derived from the root '*Hṛ*, to take away' signifies the destroyer of the entire Universe. (128)

The *ī* found in combination therewith (with *Hṛ*) signifies that Radiance which is the cause of Creation and Preservation. In other words, *Hrī* signifies that Mother who shines in the heart (Daharākās'a) dispelling all pain. (129)

The word ending with *Sa Ka La* forms with the *Hrīkāra* a Karma-dhāraya (Appositional compound) with *ṃ*, which means either Nāda or Saṃvid (knowledge), as the substantive which it qualifies. (130)

तत्प्रकारमेव प्रदर्शयति—

**धातोर्बह्वर्थत्वाद्बहुलग्रहणात्पृषोदरादित्वात् ।**
**आकृतिगणपाठेन स्वेच्छाऽनुगुणादुणादिकल्पनतः॥१३१॥**
**छन्दसि सर्वविधीनां वैकल्पिकतावशादमुष्य मनोः ।**
**सिद्धैः कथिते ऽर्थे ऽस्मिन्वैयाकरणानुशासनानुमतिः॥१३२॥**

'कुर्दखुर्दगुर्दगुद क्रीडायामेव' इत्येवकारेण 'तनूकरणे तक्षः' (३-१-७६) इत्यत्रार्थनिर्देशबलाच्च सत्ताऽऽद्यर्थनिर्देशस्योपलक्षणमात्रत्वेन

धातवो ऽनेकार्थाः । तेन स्यतेरन्तकर्मवाचकत्वे ऽप्युपभोगार्थकत्वमविरुद्धम् । अत एव चेङो ऽधिपूर्वत्वात्केवलप्रयोगासंभवे ऽपि 'इटकिटकटी गतौ' इत्यत्र प्रश्लिष्ट ईकार एवैतदर्थको भविष्यति, गत्यर्थानां सर्वेषामपि ज्ञानार्थकत्वात् । बहुलेति । 'क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्य एव । विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥' इति बहुलपदार्थः । तेन ल्ह्वीत्यत्राकारलोपः सिद्धः । 'रण्डः' इत्यादिसिद्ध्यर्थमङितो ऽपि ञमन्ताड्डस्य डित्त्वमपि सिद्धम् । गत्यन्तरमप्याह—पृषोदरादित्वादिति । 'पृषोदरादीनि यथोपदिष्टम्' (६-३-१०९) पृषोदरादयः शब्दा यथैव शिष्टैः प्रयुज्यन्ते तथैव साधवः, न तत्र लक्षणान्तरं मृग्यमित्यर्थः । न चैवं सति स्थलान्तरे ऽपि ल्ह्वीति प्रयोगापत्तिः पृषोदरशब्दवदिति वाच्यम्, अत्रैव साधुरिति नियमस्वीकारात् । अत एव 'गूढोऽऽत्मा' इति न स्थलान्तरे प्रयुज्यते । अत एव च विष्णुसहस्रनामभाष्ये 'न्यग्रोधोदुम्बरो ऽश्वत्थः' इत्यत्र पृषोदरादित्वात्संधिरित्युक्तं शंकरभगवत्पादैः । गणपाठाभावे त्वाह—आकृतीति । षुन्धातोर्डप्रत्ययादर्शनादाह—स्वेच्छेति । 'संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे । कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥' इति वचनाट्टिलोपार्थं डित्त्वकल्पनेत्यर्थः । छान्दसत्वसमाधानं तु निरङ्कुशमित्याह—छन्दसीति ॥ १३१, १३२ ॥

The meaning given to the Mantra by Siddha-s (Adepts) will be found to have the sanction of Grammarians (for one or other of the following reasons): roots are capable of more meanings than one; Bahula is an accepted convention; cases there are which are comprised in Pṛṣodarādi-gaṇa, or come

under the Ākṛti-gaṇa-pāṭha; the import of Uṇ-ādi-sūtra-s is twisted to suit the purpose; rules of ordinary grammar cannot be strictly applied to Chandas. (131, 132)

समस्तार्थपदनिरुक्तिपूर्वकमुपसंहरति—

**बहुतरसमासयोगात्समस्तपुरुषार्थसाधनत्वोक्तेः ।**
**संक्षेपात्सारोक्तेः श्रीविद्यायाः समस्तार्थः ॥ १३३ ॥**

समस्तपदस्यार्थ इति वा, समस्ताः सकला अर्थाः पुरुषार्था यस्मिन्निति वा, समस्तः संक्षिप्तो ऽर्थ इति वा निरुक्तिः ॥ १३३ ॥

The *Samastārtha* of the S'rī-vidyā is so called, because it involves the compounding of several words, attributes to the Mantra the accomplishment of all human desires, and gives out the essence of the Vidyā in an abridged form. (133)

अथ सगुणार्थमाह—

**को विधिरेकारो हरिरकार ईशः स्तवार्थमीडपदम् ।**
**द्विस्वरमध्यगतस्य डकारस्य ळकार आदेशः ॥ १३४ ॥**
**तेनर्ग्वेदात्मत्वं सूचितमाद्यस्य कूटस्य ।**
**क्रमशो ऽग्रिमकूटयुगे तेन यजुःसामता सिद्धा ॥ १३५ ॥**
**ह्रीमिति नाम विशेष्यं नपुंसकं ब्रह्मलक्षकत्वेन ।**
**विधिहरिगिरिशैरीड्यं ब्रह्मेति प्रथमकूटार्थः ॥ १३६ ॥**

एकारोत्तरं पूर्वरूपेणाकारः प्रश्लिष्यते। स च शिववाचकः, 'अकारो ब्रह्मविष्ण्वीशकमठेषु' इति कोशात्। 'कः प्रजापतिरुद्दिष्टः' इति 'एकार उच्यते विष्णुः' इति चैकाक्षरनिघण्टूक्तेर्ब्रह्मविष्णुपरौ ककारैकारौ। 'ईड स्तुतौ' इति धातोरचि स्तुत्य इत्यर्थः; एतस्यर्ग्वेदात्मकत्वादज्द्वयमध्यगतस्य डकारस्य स्थाने ळकार आदेशः 'अग्निमीळे पुरोहितम्' इत्यादिवत्। तदुक्तं बह्वृचप्रातिशाख्ये—'द्वयोश्चास्य स्वरयोर्मध्यमेत्य संपद्यते स डकारो ळकारः' (१–१०) इति। इदमेव च ज्ञापकमाद्यकूटस्यर्ग्वेदात्मकत्वे द्वितीयतृतीयकूटयोर्यजुर्वेदसामवेदात्मकत्वे च। यद्यपि 'कामो योनिः कमला वज्रपाणिः' इत्यत्र वज्रपाणिशब्देन लकार एवोद्धृतो न ळकारः' तथा ऽपि लळयोरभेदाभिप्रायेणेदम्। अत एव क्वचित्तन्त्रे त्रिखण्डीगतास्त्रयो ऽपि मोहार्णपदेन ळकारा एवोद्धृताः। नपुंसकमिति। अव्ययमित्येव युक्तम्, स्वरादेराकृतिगणत्वात्। अत एव त्रिशत्यामेकोनशततमस्य नाम्नो नमोयोगे चतुर्थ्यां प्राप्तायामपि 'ह्रीं नमः' इत्येव सांप्रदायिकानां प्रयोगः संगच्छते॥ १३४—१३६॥

*Ka* is Brahman, *E* is Viṣṇu and *A* is S'iva; the word *ĪḌa* signifies praise; the *Ḍa* standing between the two vowels has *Ḷa* as its Ādes'a (substitute). Hence the identity of the first Group with the Ṛg-veda is implied. The identity of the next two Groups in order with Yajus and Sāman becomes thus patent. The name *Hrīṃ* of the substantive, because it indicates *Brahman* is in the neuter gender. The *Brahman* is worthy of being praised by Brahman,

Viṣṇu and Rudra. This is the meaning of the first Group. (134—136)

हसकं तु हसद्वदनं मतं ककारस्य वदनवाचित्वात् ।
यद्वा हस आनन्दः कः सूर्यो हस्तु चन्द्रः स्यात् ॥१३७॥
एतौ लौ नयने यस्य तत्तु कहलं रवीन्दुनेत्रमिति ।
तेन प्रकाशकत्वाच्चिद्रूपत्वं च निगदितं भवति ॥ १३८ ॥
विधिहरिगिरिशेड्यत्वे हेतू एते हसत्वकहलत्वे ।
तेनात्यमितानन्दं चिद्ब्रह्मेति द्वितीयकूटार्थः ॥ १३९ ॥

हसो हास्यम् । अर्शआदित्वान्मत्वर्थीयो ऽच् । ततः ककारेण मुखवाचकेन बहुव्रीहिः । हसः को यस्य तदिति विग्रहः । यद्वा हासस्यानन्दजन्यत्वादानन्दे हसपदस्य लक्षणा । कश्च हश्च कहौ, कहौ लौ यस्य तत्कहलम् । 'मुखे सूर्ये ऽपि कः स्मृतः' 'हः कोपे वरुणे चन्द्रे' 'इन्द्रे ऽपि लोचने लः स्यात्' इत्येकाक्षरनिघण्टुः । हसपद-कहलपदयोः कर्मधारयः । एतदर्थप्रतिपादकं मूलमाह—हेतू इति । यतो ह्रीं हसकहलं ततो ह्रीं कएईलमित्यन्वयः ॥ १३७–१३९ ॥

As *Ka* signifies the face, *HaSaKa* would mean a smiling face. Also, *HaSa* means Ānanda (Bliss). *Ka* is the sun while *Ha* would mean the moon. That which has *Ka* and *Ha* (the sun and the moon) for its *La-s*, eyes, is *Ka Ha La*. Hence Its Cid-rūpa-tva (assuming the form of the Supreme Consciousness) is also meant. The two, HaSa-tva and KaHaLa-tva,

form the cause of the *Brahman* being praised by Brahman, Viṣṇu and Rudra. Hence the second Group means: "The *Brahman* is immeasurable Bliss and Supreme Consciousness." (137—139)

सकलकलाभिः सहितं सकलं ब्रह्म तु तृतीयकूटार्थः ।
इत्थं गुणगणकथनाद्विद्याया एष सगुणार्थः ॥ १४० ॥

अत्र सर्वत्र सुलोपः । स्पष्टमन्यत् ॥ १४० ॥

The *Brahman*, comprising all Its Kalā-s and hence known as *SaKaLa*, is the meaning of the third Group. By describing its Guṇa-gaṇa-s (all its attributes) in this manner, the *Sa-guṇārtha* of the Vidyā (is got). (140)

चरमोद्दिष्टं महावाक्यार्थमाह —

विधिहरिशिववचना अपि ककार एकारको ऽकारः ।
सृष्टिस्थितिभङ्गात्मकतत्तज्जनकत्वलाक्षणिकाः ॥ १४१ ॥
ईश्वरवाचीकारो वक्ति डकारः सदाशिवं ताभ्याम् ।
लक्षणया तत्र [1]तिरोधानानुग्रहणकृत्यता गदिता ॥१४२॥

ईकारस्य नामैकदेशन्यायेनेश्वरबोधकत्वम् । 'डो महेशः समाख्यातः' इति वचने ऽपि प्रकृते सदाशिव एवानुग्रहकर्ता विवक्षितः ।

[1] तिरोधाऽनुग्रहकृत्यकारिता.

एतेन 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतावुक्तं ब्रह्मणस्तटस्थ-लक्षणमुक्तं भवति ॥ १४१, १४२ ॥

Although the letters *Ka*, *E* and *A* signify Brahman, Viṣṇu and Rudra, they are to be understood in their secondary sense of Creation, Preservation and Destruction, which are the respective functions of those (Deities). *Ī* signifies Īs'vara and *Ha* implies Sadā-s'iva. By these two letters are to be understood, secondarily, Tiro-dhāna and Anugrahaṇa, the respective functions of those two Deities. (141, 142)

अथ 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्युक्तं स्वरूपलक्षणं द्वितीयकूटेनाह—

हस आनन्दः सत्यं कं ह्मनन्तं च लं ज्ञानम् ।

'सखा कश्च बुधैः प्रोक्तः' इति कोशात्ककारः सखिवाचकः । सखित्वमाप्तत्वम् । तच्च यथाऽर्थवक्तृत्वमिति शक्यसंबन्धेन प्रकृते सत्यमेव विवक्षितम् । एवं हकारस्य व्योमबीजत्वेन व्योम्नो ऽनन्तत्वादनन्तमित्यर्थः । प्रत्यक्षज्ञानजनकलोचनवाचिलकारस्य ज्ञानमर्थः ॥ १४२- ॥

*HaSa* is Ānanda, *Ka* is Truth, *Ha* is Infinity and *La* is knowledge. (142-)

इत्थं ब्रह्म तटस्थस्वरूपलक्षणयुगेन निर्णीय ॥ १४३ ॥
तदभेदं जीवगणे वक्ति तृतीयेन कूटेन ।
जाग्रत्स्वप्नसुषुप्त्याख्यकलात्रितयेन [1]साहित्यात् ॥ १४४ ॥

[1] सहितत्वात्.

सकलपदं जीवपरं ब्रह्मपरं शक्तिबीजं स्यात् ।
सामानाधिकरण्यात्तल्लक्षितशुद्धयोरभेदार्थः ॥ १४५ ॥
अत्यल्पमिदं कथितं यत्सर्वं खल्विदं ब्रह्म ।
इत्येवं बोधयितुं सकलपदं वा तृतीयकूटगतम् ॥ १४६ ॥
एवमवान्तरवाक्यैर्जीवब्रह्मस्वरूपमभिधाय ।
तदभेदो वर्णित इत्येष महापूर्ववाक्यार्थः ॥ १४७ ॥

'तत्त्वमसि' इति महावाक्ये तत्पदार्थत्वंपदार्थयोरेकविभक्तिमत्त्वरूपसामानाधिकरण्यादभेदो बोध्यते। स च वाच्यार्थयोरसंभवाज्जहदजहल्लक्षणया लक्ष्यपदार्थयोरिति स्थितिः। तत्र तत्पदस्य वाच्यार्थः सृष्ट्यादिकृत्यपञ्चकजनकः। स च 'यतो वा इमानि भूतानि जायन्ते' इत्यादिना श्रुतावुक्तः। लक्ष्यार्थस्तु कृत्यातीतं निर्विशेषं ब्रह्म। तदपि 'सत्यं ज्ञानम्' इत्यादिना प्रतिपादितम्। एवं त्वंपदस्य वाच्यार्थो जाग्रदाद्यवस्थापञ्चकविशिष्टः। स च 'तद्यथा ऽस्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्य पक्षौ संलयायैव ध्रियत एवमेवायं पुरुष एतस्मा अन्ताय धावति। तद्यथा महामत्स्यः' इत्यादिश्रुतिभिरुक्तः। लक्ष्यार्थस्त्ववस्थाद्यतीतं ब्रह्म। तदपि 'यो ऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः, न दृष्टेर्द्रष्टारं पश्येः' इत्यादिभिः प्रतिपादितम्। एवमवान्तरवाक्यैर्वाच्यार्थलक्ष्यार्थयोर्निर्णये सति, महावाक्ये लक्ष्यार्थयोरभेदबोधः। यद्यपि श्रुतिषु कृत्यत्रयमवस्थात्रयमेव वर्ण्यते, तथा ऽपि तन्त्रानुसारात्तत्पञ्चकोपलक्षणपरत्वेन व्याख्येयं त्रिवृत्करणस्य पञ्चीकरणपरत्वमिव। एवं च प्रकृते तृतीयकूटस्थसकलपदेन कलाभिरवस्थाभिः सहित इत्यर्थकेन

वाच्यार्थस्योक्तावपि लक्ष्यार्थानुक्तेर्न्यूनता । तदर्थं च कूटद्वयमेवावृत्त्या त्वंपदस्य वाच्यार्थलक्ष्यार्थयोः समर्पकत्वेन व्याख्येयम् । अथ वा, तान्त्रिकाणां मते वाच्यार्थयोरप्यत्यन्ताभेदस्य शांभवानन्दकल्पलताकारादिभिरुपपादनात्कूटद्वयेन सृष्टिकर्तृत्वादिविशिष्टस्यावस्थाऽऽदिविशिष्टस्यैव वाच्यार्थस्य समर्पणम्; तृतीयकूटे तु तयोरभेदो जगतो वा संपूर्णस्याभेदो बोध्यते । इह यावान्वक्तव्यो ऽंशस्तावतः सर्वस्याप्युक्तौ वेदान्तशास्त्रस्यैव कृत्स्नस्यारम्भणीयताऽऽपत्त्योपरम्यते । महापूर्वेति । महांश्चासौ पूर्वश्च वाक्यार्थ इति, महाशब्दः पूर्वो यस्मिन्वाक्ये शब्दे तस्य महावाक्यस्यार्थ इति वा निरुक्तिः । एते चार्था उपलक्षणभूताः । तेन तन्त्रेषु तत्र तत्रोक्तानामन्येषामप्यर्थानां संग्रहः । तथा हि—योगिनीहृदये तावत् 'आत्मनः स्फुरणं पश्येद्यदा सा परमा कला' इत्यारभ्य कांश्चिच्चतुरश्चतुरः पदार्थानुक्त्वा तद्वाचकत्वं कूटत्रयं तुरीयविद्या चेति चतुर्णां शब्दानां प्रतिपादितम्—'कूटत्रितययुक्तस्य सकलस्य मनोः पुनः । एतानि वाच्यरूपाणि कुलकौलमयानि तु ॥' इति । एवं च यावन्ति चतुष्काणि तावन्तो मन्त्रार्थाः । तानि च प्रथमे ऽंशे 'पुटधाम—' इत्यादिश्लोकोक्तानि । तत्र हि यद्यपि कूटानां पुटाद्यभेद एवोक्तः, तथा ऽपि स वाच्यवाचकभाव एव पर्यवस्यति, शब्दार्थयोस्तादात्म्यस्यैव शक्तिरूपत्वेन पातञ्जले मञ्जूषायां च स्पुटतरमुपपादनात् । एवं कादिमते पञ्चत्रिंशे पटले चतुर्विंशादिभिस्त्रिभिर्व्याकुलाक्षरैः श्लोकैरर्थो वर्णितः—'णैंःयाभिलिर्वेताश्लिल तेर्थोधीकयलाऽभिस । णदेरूषेपेणवीशे तमृदिमीनरिस्यादते ॥ १ ॥ त्स्वंतोगशेत्कृषजअ तमृत्ममीलेरिखाकहृ । तःर्थकस्याथिश्चास्तुत तःन्त्रेगोर्वपितषुस ॥ २ ॥ त्वंकामाम्नानप्रशव्यो नानमसन्निमात्वग्र । रोमईयोकार्विंशत नमृतभान्दुलनान्निबि ॥ ३ ॥' इति । एतेषां वाचनक्रमो यथा—'देवतारथगो मूक (८४६२७३५१) इति यो

वेत्ति न क्रमम् । स व्याकुलाक्षरे मूको देवतारथगो ऽपि सन् ॥' इति[1] । तृतीयकूटे वर्णत्रयं सर्वार्थकम्; तुर्यमक्षरं देव्यर्थकम्; तेनायमर्थः संपन्न इति प्रथमश्लोकस्यार्थः । सर्वं जगद्देवीरूपमेवेत्यर्थस्तन्त्रान्तरेषु गोपित इति द्वितीयश्लोकस्य । लज्जाबीजस्थैश्चतुर्भिरक्षरैर्यत्प्रकाशकं यच्च ग्रसिष्णु, तयोर्यत्सामरस्यं तत्तादात्म्यं द्वितीये प्रतिपाद्यत इति तृतीयस्य । प्रकाशग्रासशब्दौ तूत्पत्तिसंहारयोर्विद्याऽविद्ययोर्वा वाचकाविति । अयमप्यर्थः 'अत्यल्पमिदं कथितम्' इति श्लोके सूचितः । एवं चात्र 'पुटधाम—' इति श्लोके त्रयोदशार्थाः; गायत्र्यादिपञ्चदशार्थेषु भावार्थाश्चत्वारः, नामार्थास्त्रयः, शाक्तार्थौ द्वौ, कौलिकार्थे ऽपि गणेशादिरूपत्वस्य देवीविद्याचक्रभेदेन त्रैविध्यम्, महावाक्यार्थे ऽपि द्वैविध्यमिति चतुर्दश; शेषा दश; इति मिलित्वा सप्तत्रिंशदर्थाः । नामैकदेशार्थे त्वनन्ता भेदा उक्ताः । एवं बहुतन्त्रद्रष्टृभिरन्ये ऽप्यर्थाः संग्राह्याः ॥ १४३—१४७ ॥

Having ascertained, in this manner, the *Brahman*, through Its Taṭa-stha- and Svarūpa- lakṣaṇa-s (qualities), (the Mantra) establishes the identity (of the *Brahman*) with species of Jīva-s in the following manner: The term *SaKaLa* refers to Jīva, as the latter has the three Kalā-s, Jāgrat, Svapna and Suṣupti. *Hrīṃ*, the S'akti-bīja, denotes the S'akti. As there is opposition

[1] ललितायास्त्रिभिर्वर्णैः सकलार्थो ऽभिधीयते ।
शेषेण देवीरूपेण तेन स्यादिदमीरितम् ॥ १ ॥
अशेषतो जगत्कृत्स्नं हृल्लेखाऽऽत्मकमीरितम् ।
तस्याश्चार्थस्तु कथितः सर्वतन्त्रेषु गोपितः ॥ २ ॥
व्योम्ना प्रकाशमानत्वं ग्रसमानत्वमग्निना ।
तयोर्विमर्श ईकारो बिन्दुना तन्निभालनम् ॥ ३ ॥

between the two, the pure things implied by them are identical. Thus far, only a very little has been said. The term *SaKaLa* of the third Group is used to imply that all this is *Brahman*. Having in this manner described the form of the Jīva and the *Brahman* by means of suggestive sentences, their identity has been established. This then is the *Mahā-vākyārtha*. (143—147)

**शक्त्या लक्षणया वा ये ये ऽर्था दर्शिता मनोरस्य ।**
**तेषु न को ऽपि विवादः प्रत्यक्षेणैव सिद्धत्वात् ॥१४८ ॥**

मनोर्मन्त्रस्य । प्रत्यक्षेणेति । शक्तिग्राहकव्याकरणकोशादेः शक्यसंबन्धस्य च स्फुटं प्रदर्शनादिति भावः ॥ १४८ ॥

No controversy can arise about the meanings, whether primary or secondary, that have been given herein to this Mantra, as such meanings carry a clear conviction on bare presentation (to the mind). (148)

**ये पुनरिह भावार्थादयः षडर्था मनोरुक्ताः ।**
**तेषु यदि शक्तिभक्ती न हि संभवतस्तदा ऽपि का हानिः ॥**

शक्तिग्राहकव्याकरणाद्यभावान्न शक्तिः; अत एव च न शक्यसंबन्धरूपा भक्तिरपि । व्यक्तिरूपा तृतीया वृत्तिर्भविष्यति, 'वक्तृबोद्धव्यकाकूनामन्यसंनिधिवाच्ययोः । प्रस्तावदेशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम्' इत्यत्रादिपदेनोपासना ऽपि ग्रहीष्यत इत्याशयेन समाधत्ते—का हानिरिति ॥ १४९ ॥

If, in the six meanings beginning with the Bhāvārtha that have been attributed to this Mantra, there has been no possibility of the application, either of its primary or secondary sense, what harm is there? (149)

व्यञ्जनाया बहुभिरनङ्गीकारादाह—

**आस्तामन्या वृत्तिर्विलक्षणा तद्ग्रहस्तु मनोः ।**
**शिववचनेन भविष्यति यद्वैषा शक्तिरेवास्तु ॥ १५० ॥**
**एतस्मादयमर्थो बोद्धव्य इतीश्वरेच्छात्वात् ।**

अन्या शक्तिभक्तिव्यक्तिभ्यो विलक्षणा शक्त्यादित्रितयप्रक्रियातो विलक्षणप्रक्रियाशालिनी । उच्छृङ्खलस्य पन्थानं परित्यज्याह—यद्वेति । शिवेनैवास्यायमर्थ इति स्पष्टमुक्तत्वादिति भावः ॥ १५०, १५०- ॥

Let there be any sense quite different (from the primary and secondary); the acceptance of any such sense of the Mantra has to be determined by the words of S'iva. In other words such sense may even be considered as the primary one. (150)

For, it is the desire of Īs'vara that such and such meaning should be conveyed by such and such (word). (150-)

**प्रतिपदमर्थविशेषाज्ञाने ऽप्यास्तामखण्डवाक्यस्य ॥ १५१ ॥**
**अर्थो ऽप्यखण्डरूपो विशिष्टमतिरिक्तमिति हि सिद्धान्तः ।**
**आसेचनकव्याप्त्यादिपदवदास्तां पदत्वमपि ॥ १५२ ॥**

इदं पदमिममर्थं बोधयत्वितीच्छायामर्थबोधजनकत्वनिष्ठप्रकारता-निरूपितविशेष्यताशालित्वेन पदस्यापि विषयत्वात्प्रकृते प्रतिपदमर्थानुक्तेः कथं शक्तिरिति चेन्न; इदं वाक्यमिममखण्डार्थं बोधयत्वित्याकारिकाया एवेच्छायाः कल्पनात्। वाक्यस्याखण्डत्वं वैयाकरणानामिष्टमेव। अर्थ-स्याखण्डत्वम् 'प्रकृष्टप्रकाशश्चन्द्रः' इत्यादिवाक्यार्थं वर्णयतामौपनिषदाना-मिष्टमेव। तच्च विचार्यमाणे विशिष्टस्यातिरिक्तत्व एव पर्यवस्यति। तथा च यत्र प्रतिपदमर्थविवेकस्तत्रेयं रीतिः; यत्र यत्र न स तत्र संपूर्णस्यैकपदत्वमेवास्तु। न चैकस्य पदस्य विशिष्टबह्वर्थवाचकत्वमदृष्टमिति वाच्यम्, घटत्वघटसमवायानां घटपदवाच्यत्वात्, 'तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्' इति कोशात्, हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगि-साध्यसामानाधिकरण्यस्य व्याप्तिपदार्थत्वाच्चेत्याह—आसेचनकेति। आदिनो-पाधिपरिग्रहः। तेनेश्वरेच्छायां पदस्यैव विशेष्यत्वे ऽपि न प्रकृतनिर्वाहाय विलक्षणेच्छाकल्पनाऽऽपत्तिः॥ -१५१, १५२॥

What if the meanings, *verbatim*, are not known? Enough if the sense as a whole of the whole sentence is understood. The accepted theory in this matter is that the spirit is quite different from the letter. If need be, the whole Mantra may be treated as a single word, as in the case of *Āsecanaka*, *Vyāpti*, etc. (-151, 152)

नन्वस्य पदत्वे ऽनेकार्थत्वं दोष इत्यत आह—

**एकस्यानेकार्था दृष्टा हरिसैन्धवादिषु पदेषु।**
**अन्यतमैकावगतौ प्रकरणतात्पर्ययोर्विशेषकता॥ १५३॥**

**प्रकृते तु सर्वबोधस्येष्टत्वान्नो विशेषकाकाङ्क्षा ।**
**अथ वा सकलार्थेष्वपि शक्त्यैक्यं पुष्पवन्तपदवदिह ॥**

अनेकार्थतायाः प्रमाणबलायातत्वाददोषत्वम् । सर्वत्रानेकार्थस्थलेऽन्यतमस्यैकस्यैव बोधनार्थं प्रकरणादिज्ञानस्य कारणत्वादिकल्पनदोषः, प्रकृते तु तदभाव इत्याह—अन्यतमेत्यादिना । अथ वा, ईश्वरेच्छाविषयीभूतबोधीयविशेष्यता यथा सूर्याचन्द्रमसोः पर्याप्तैकैव स्वीक्रियत इति न तत्र पुष्पवन्तपदे शक्त्यनेकत्वम्, तद्वदिहाप्यस्त्वित्याह—अथ वेति ॥ १५३, १५४ ॥

A single word conveys more than one sense; *e.g.*, in the words *Hari*, *Saindhava*, etc. In accepting one of several meanings, the context and the aim are the two indices. (153)

As, in the case on hand, all implications are desirable there is no need for any index. To argue in another way (in this Mantra) one S'akti embraces all the senses, as in the word *Puṣpa-vanta*. (154)

**यत्र प्रतिपदमर्थस्तान्प्रत्यस्यास्तु वाक्यत्वम् ।**
**क्वचनावान्तरवाक्यं समासवाक्यं महावाक्यम् ॥ १५५ ॥**

यत्र गायत्र्यर्थनामार्थादिषु । अवान्तरवाक्यं सगुणार्थावयवार्थादौ । अवान्तरवाक्यत्वं नाम वाक्यसमूहभिन्नत्वे सति पदसमूहत्वमेव, न पुनर्महावाक्यौपाधिकत्वरूपं प्रकृते । समासवाक्यं समस्तार्थे । महावाक्यं चरमेऽर्थे ॥ १५५ ॥

In those cases wherein it has been held that every word has a corresponding meaning, this Mantra may be treated as a sentence; in some cases as Avāntara (leading) vākya, in others as Samāsa-vākya, and in one other case as Mahā-vākya. (155)

एकस्यानेकार्थे विनियोगादर्थबाहुल्यम् ।
वेदे बहुशः स्वीकृतमत्र त्वेकत्र विनियोगात् ॥ १५६ ॥
अखिलार्थबोधनियमो नियमादृष्टं प्रकल्पयति ।
सिद्धे प्रमाणदार्ढ्ये सकलं कल्प्यं हि तदविरोधाय ॥ १५७॥

पदपक्षे ऽनेकार्थतादोषपरिहारवद्वाक्यपक्षे ऽपि संभवति, पुरुषसूक्तस्य तत्तद्देवतापूजायां विनियोगेनानेकार्थत्वस्येष्टत्वात् । इयांस्तु विशेषः— तत्तत्पूजायां तस्य तस्यैवार्थस्य स्मरणं पुरुषसूक्ते; प्रकृते तु सर्वेषामर्थानां स्मरणेनैवादृष्टोत्पत्तिरिति भावः ॥ १५६, १५७ ॥

In the Veda it has been recognized that by the application of one (Mantra) in several contexts various meanings are conveyed. But in this case, as the Mantra relates to only one context the implication of all possible meanings forms the condition precedent leading to the Niyamādṛṣṭa (consequence to be obtained). If the authority of a statement is once strongly established, every thing leading to it has to be conceded with a view not to contravene such statement. (156 & 157)

सिद्धे प्रमाणदार्ढ्यं इत्यत्र दृष्टान्तमाह—

**यागस्य स्वर्गं प्रति संसिद्धे हेतुहेतुमद्भावे ।**
**तदनुपपत्तिं निरसितुमलौकिकापूर्वमपि क्लृप्तम् ॥ १५८ ॥**

'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यत्र तृतीयाश्रुत्या यागस्य जनकत्वे काम्यमानतया स्वर्गस्य जन्यत्वे च बोधिते ऽपि भिन्नकालीनयोस्तदयोगाद्देवताप्रसादयागध्वंसादिना ऽत्र निर्वाहाभावादपूर्वेणैवानुपपत्तिनिरास इत्यादि तन्त्रान्तरेषु विस्तरः ॥ १५८ ॥

Even though it is accepted (on the authority of the Veda-s), that Yāga and Svarga are related (to each other) as antecedent and consequence, (an intermediary stage) A-pūrva, not known to the world, has to be conceded so as to avoid the (apparent) absence of contiguity (between the two). (158)

अस्मिन्प्रकरणे पूर्वं वर्णितान्पञ्चदशार्थान्संगृह्यानुवदति—

**विद्यावर्णयत्तोद्धारः कालस्तदुच्चारः ।**
**उत्पत्तिस्थानं तद्यत्नो रूपं स्थितिस्थानम् ॥ १५९ ॥**
**आकारः स्वं रूपं विभाव्यमर्थो ऽन्तरङ्गाणि ।**

विद्यायां वर्णयत्ता ऽष्टपञ्चाशद्रूपा वर्णसंख्या । उद्धारः 'क्रोधीशः श्रीकण्ठारूढः' इत्यादिनोक्तः । कालस्त्रिलवोनैकत्रिंशन्मात्रा ऽऽत्मको विद्यायाः, एकलवोना ऊनत्रिंशन्मात्रा उच्चारणस्य । उच्चारणम् 'इत्येवं वर्णा-

नाम्' इत्यादिसार्धश्लोकत्रयेणोक्तम् । उत्पत्तिस्थानम् 'कण्ठे च कण्ठ-तालुनि' इत्यत्रोक्तम् । यत्नो बाह्यश्चान्तरश्च । रूपादित्रयम् 'प्रलयाग्नि-निभम्' इत्यादिनोक्तम् । स्वं रूपम् 'व्यष्टिसमष्टिविभेदात्' इत्यादिनोक्तम् । विभाव्यमवस्थापञ्चकादि । अर्थो गायत्र्यर्थादिरूपः । इमान्यन्तरङ्गत्वादु-पासकानामत्यावश्यिकानि ॥ १५९, १५९- ॥

The number of letters contained in the Vidyā, Uddhāra (the process of drawing out), Kāla (Mātrā-periods), pronunciation, places of origin, the (requisite) efforts, appearances, positions, shapes, form *par excellence*, the different states and meanings, these form the internal limbs of the Vidyā ; (159, 159-)

**ऋषयश्छन्दोदैवतविनियोगा बीजशक्तिकीलानि ॥ १६० ॥**
**न्यासा ध्यानं नियमाः पूजाऽऽदीनि बहिरङ्गाणि ।**
**बाह्यान्यङ्गानि पुनः प्रायो लोके प्रसिद्धकल्पानि ॥१६१॥**

ऋषयो हयग्रीवादयः । छन्दांसि पङ्क्त्यादीनि । दैवतं त्रिपुर-सुन्दरी । विनियोग इष्टार्थजनकत्वे । बीजं वाग्भवादि । शक्तिः पराऽऽदिः । कीलकं कामराजादि । न्यासा ऋष्यादिन्यासजालम् । ध्यानम् 'अरुणां करुणातरङ्गिताक्षीम्' इत्यादिना कथितम् । नियमाः पुण्ड्रेक्षुदण्डभक्षण-वर्जनसंकल्पादयः । पूजाः पात्रासादनादिशान्तिस्तवान्ता नित्यादिभेदेन त्रिविधाः, पराऽऽदिभेदादपि त्रिविधाः, केवलादिभेदात्पञ्चविधा अपि । आदिना होमतर्पणादिपरिग्रहः । एतानि बहिरङ्गत्वेनावश्यिकानि । प्रसिद्ध-कल्पानि, ईषन्न्यूनप्रसिद्धिमन्ति । प्रायः प्रसिद्धानीत्यर्थः । कल्पप्प्रत्ययः ।

तानि च प्रकाशवरिवस्याविधौ प्रपञ्चितान्यस्माभिः। अतो ऽत्र ग्रन्थे नोक्तानीति भावः ॥ -१६०, १६१ ॥

While the Ṛṣi-s, Chandas-s (metres), Devatā-s, Vīniyoga (application), Bīja-s, S'akti-s, Kīlaka-s, Nyāsa, Dhyāna, Niyama-s, Pūjā-s, etc., are its external limbs. The external limbs are, for the most part, well-known to the world. (-160, 161)

**दुर्लभमान्तरमङ्गं प्रायो ऽन्तर्मुखजनैस्तदादृत्यम् ।**
**तोषायैषा तेषामतः प्रदिष्टा रहस्यवरिवस्या ॥ १६२ ॥**

अन्तर्मुखैर्विषयेष्वनासक्तचित्तैर्जनैः। प्रदिष्टोपदिष्टा, 'विद्ययोः पथि मुनिप्रदिष्टयोः' इति कालिदासप्रयोगात् ॥ १६२ ॥

The internal limbs, on the other hand, are most of them rarely understood. They should be pursued by Upāsaka-s. Hence, this work Rahasya-varivasyā, has been expounded for their delectation. (162)

**एतामुत्सृज्य जडैः क्रियमाणा बाह्यडम्बरोपास्तिः ।**
**प्राणविहीनेव तनुर्विगलितसूत्रेव पुत्तलिका ॥ १६३ ॥**

बाह्यो डम्बरो ऽङ्गविस्तारो यस्यां सा। प्राणसूत्रयोरन्तरङ्गत्वात्तद्भावेन यथा तयोर्न कार्यक्षमता तथेति भावः ॥ १६३ ॥

The pursuit (of the S'rī-vidyā) by the fanatics who adhere merely to the external ostentations losing sight

of the essentials (as expounded in the work) is very much like the body wherefrom life is extinct, and a marionette from which the strings have been removed. (163)

**बीजान्मूलं मूलात्क्षेत्रस्यान्तःस्थबाह्यविस्तारौ ।**
**यद्यप्यनयोः साम्यं प्राधान्यमथापि चान्तरङ्गस्य ॥ १६४ ॥**

बीजात्कामकलारूपाद्धान्यादिरूपाच्च । मूलं वृक्षपादो मन्त्रश्च । क्षेत्रस्य शरीरस्य केदारस्य च । यद्यप्यनयोः साम्यं बीजजन्यत्वाविशेषात्; तथा ऽपि 'अन्तरङ्गनाशे बाह्याङ्गसहितवृक्षनाशः, बाह्याङ्गमात्रनाशे ऽपि न वृक्षस्य न वा ऽन्तरङ्गस्य नाशः' इत्यस्य प्रसिद्धत्वादिति भावः ॥ १६४ ॥

Out of the seed (Kāma-kalā-bīja) evolves the root (Mūla-mantra); out of the root (Mūla-mantra) evolve the parts of the plant (human body), above and below the soil (external and internal). Though both of them are of equal importance, more importance has to be attached to the subsoil (internal) parts. (164)

यद्यपीमान्यावश्यिकतरत्वादत्र ग्रन्थे निबद्धानि, तथा ऽपि पाण्डित्यबलादेतद्ग्रन्थावलोकनादेव गुरुमनपेक्ष्य स्वीकारः पापायेत्याह—

**सद्गुरुकुलतः कृपया लब्धा कामानियं सूते ।**
**निजबुद्धिमात्रजन्या पापं कन्या यथा स्वीया ॥ १६५ ॥**

पापं सूत इत्यन्वयः । सद्गुरोः 'सुन्दरः सुमुखः स्वस्थः' इत्यादितन्त्रराजोक्तलक्षणविशिष्टस्य । कृपया सेवाजनितप्रसादेन, 'पारंपर्यविहीना

ये ज्ञानमात्रेण गर्विताः । तेषां समयलोपेन विकुर्वन्ति मरीचयः ॥' इति वचनात् । मरीचयो डाकिन्यादयः । विकुर्वन्ति धातुविकारप्रापणेन मारयन्तीत्यर्थः । कन्यापक्षे सद्गुरुः श्वशुरः ॥ १६५ ॥

This Varivasyā (maid), duly courted by a person from the house of the Guru (father-in-law) with his grace, brings about the accomplishment of his heart's desires; while, if courted by him impelled by his own blind passions, she leads him into the path of sin (astray). (165)

'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि हि शास्त्राणि प्रथन्ते' इति वचनादन्ते मङ्गलमारचयति—

**अकथासनं ह्-ळक्षान्तरं समासाद्य मामकं ज्ञानम् ।**
**मामकमेवानन्दं मह्यं ददतो जयन्ति गुरुचरणाः ॥ १६६ ॥**

कथानां वाचामनासनमविषयम् । वाच्यकक्ष्यामतिक्रान्तमिति यावत् । हेति निश्चये । लक्षस्य लक्षणाया अन्तरमवकाशो यस्मिंस्तत् । पक्षे, सहस्रारपद्मकर्णिकामध्यगतत्रिकोणरेखा आदिकादिथादिषोडशार्णत्रयरूपाः, तन्मध्ये कोणेषु हकारादित्रयम्, तत्र तन्त्रेषु गुरुध्यानं कथितम् । तादृशमासनमित्यर्थः । मामकमात्माभिन्नम् ॥ १६६ ॥

May my venerable Guru triumph, who, seated on the Akathāsana (triangle with *A*, *Ka* and *Tha* series as its sides) with *Ha*, *Ḷa* and *Kṣa* at the angles, bestows

on me Knowledge and Bliss, identical with the Ātman, which transcends all description and could at best be subject to Lakṣaṇā (indirectly comprehended). (166)

गुरुचरणैकसहायो भास्कररायो जगन्मातुः ।
वरिवस्याऽतिरहस्यं वीरनमस्यं प्रजग्रन्थ ॥ १६७ ॥

वीरैः, अहमि रणाङ्गण इदमो वैरिणो नाशं कुर्वाणैः परापञ्चाशिकाऽऽदौ प्रसिद्धैः । इति सर्वमनवद्यम् ॥ १६७ ॥

Bhāskara-rāya, having for his soul guide his venerable Guru's feet, wrote the Varivasyā-rahasya (the secret of worship) of the World-Mother, adored by the valiant [who vanquish their opponent *Idam* (the phenomenal world around them) on the field of *Aham* (Ego)]. (167)

वस्तु प्रस्तुतमस्तु निस्तुलमहःस्तोमास्तितावास्तु नो
हस्तन्यस्तसमस्तपुस्तकभरध्वस्तासदेनस्तति ।
शस्तस्वस्तिकृदस्तदुस्तरतमः स्वस्तोकसौवस्तिकं
गीस्तोयस्तनयित्नुसुस्तनयुगं वास्तोष्पतिप्रस्तुतम् ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणसर्वतन्त्रस्वतन्त्रश्रीनृसिंहानन्दनाथचरणारविन्दमिलिन्देन श्रीमद्गम्भीररायभारतीदीक्षितात्मजेन भास्कररायापरनाम्ना भासुरानन्दनाथेन प्रणीतं सव्याख्यानं वरिवस्यारहस्यं संपूर्णम् ।

# प्रदेशसूचिका

# संज्ञाविवृतिः

अ० अष्टाङ्गहृदयम्
उ० उणादिसूत्रम्
ऋ०सं० ऋक्संहिता
ए०को० एकाक्षरकोशः
ऐ०आ० ऐतरेयारण्यकम्
क०उ० कठोपनिषत्
का०प्र० काव्यप्रकाशः
का०वि० कामकलाविलासः
का०वृ० काशिकावृत्तिः
ग०पा० गणपाठः
गी० गीता
छा०उ० छान्दोग्योपनिषत्
ज्ञा०त० ज्ञानार्णवतन्त्रम्
तन्त्राभि० तन्त्राभिधानम्
त०रा० तन्त्रराजतन्त्रम्
तै०उ० तैत्तिरीयोपनिषत्
तै०ब्रा० तैत्तिरीयब्राह्मणम्
तै०सं० तैत्तिरीयसंहिता
त्रि०उ० त्रिपुरोपनिषत्
त्रि०ता० त्रिपुरातापिनी
द०सं० दक्षिणामूर्तिसंहिता
दे०भा० देवीभागवतम्
दे०भा०व्या० देवीभागवतव्याख्या
धा० धातुपाठः
नाम० नामलिङ्गानुशासनम्
ना०र० नानार्थरत्नमाला
नृ०ता० नृसिंहतापिनी
न्या०सू० न्यायसूत्रम्
पा०यो० पातञ्जलयोगसूत्रम्
पा०शि० पाणिनिशिक्षा
पा०सू० पाणिनिसूत्रम्
पि०सू० पिङ्गलसूत्रम्
प्रा०प्रातिशाख्यम् (तैत्ति०)
फुल्ल० फुल्लसूत्रम्
ब०प्रा० बह्वृचप्रातिशाख्यम्
बृ०उ० बृहदारण्यकोपनिषत्
ब्र०सू० ब्रह्मसूत्रम्
म०ना० महानारायणोपनिषत्
म०भा० महाभाष्यम्
मा०को० मातृकाकोशः
मु०उ० मुण्डकोपनिषत्
यास्क० यास्कनिरुक्तिः
यो० योगिनीहृदयम्
रघु० रघुवंशः

रूपा० रूपावतारः
ल०त्रि० ललितात्रिशती
ल०स० ललितासहस्रनाम
ली० लीलावती
वा० वार्त्तिकम्
वाक्य० वाक्यपदीयम्
वा०त० वामकेश्वरतन्त्रम्
वि०स० विष्णुसहस्रनाम
श्री०भा० श्रीमद्भागवतम्
सौ० सौन्दर्यलहरी

## शोधनम्

पृ० १३ प० १७ द्विगुणं ततः

# PUBLICATIONS OF THE ADYAR LIBRARY

## (The Theosophical Society, Adyar, Madras, S. India)

| | | Rs. | A. |
|---|---|---|---|
| 1. | A PRELIMINARY LIST OF THE SAṂSKṚT AND PRĀKṚT MSS. in the Adyar Library. (Saṃskṛt-Devanāgarī) 1910 Boards | 1 | 8 |
| | Cloth | 2 | 0 |
| 2. | A DESCRIPTIVE CATALOGUE OF THE SAṂSKṚT MSS. in the Adyar Library. By F. O. Schrader, Ph.D., Vol. I, Upaniṣads 1912. Cloth ... | 5 | |
| 3. | THE MINOR UPANIṢADS (Saṃskṛt) critically edited for the Adyar Library. By F. O. Schrader, Ph.D., Vol. I.—Saṃnyāsa 1912. Cloth ... | 10 | 0 |
| 4. | AHIRBUDHNYA-SAṂHITĀ OF THE PĀÑCARĀTRA ĀGAMA (Saṃskṛt), Edited under the supervision of F. O. Schrader, Ph.D., 2 Vols. 1916 Cloth ... | 10 | 0 |
| 5. | INTRODUCTION (English) TO THE PĀÑCARĀTRA AND THE AHIRBUDHNYA SAṂHITĀ. By F. O. Schrader, Ph.D. 1916. Cloth ... | 3 | 0 |
| 6. | YOGA UPANIṢADS—20—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited by Pandit A. Mahadeva Sastri, B.A. 1920 ... | 5 | 0 |
| 7. | SĀMĀNYA VEDĀNTA UPANIṢADS—24-with the commentary of S'rī Upaniṣad Brahma Yogin. Edited by A. Mahadeva Sastri, B.A. 1921 ... | 5 | 0 |
| 8. | VAIṢṆAVA UPANIṢADS—14—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited by A. Mahadeva Sastri, B.A. 1923... | 4 | 0 |
| 9. | S'AIVA UPANIṢADS—15—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited by A. Mahadeva Sastri, B.A. 1925 ... | 3 | 0 |
| 10. | S'ĀKTA UPANIṢADS—8—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited by Pandit A. Mahadeva Sastri, B.A. 1925 ... | 2 | 8 |
| 11. | CATALOGUE OF SAṂSKṚT MSS. in the Adyar Library (revised) Edited by the Pandits of the Adyar Library under the direction of Prof. C. Kunhan Raja, M.A., D. Phil. (Oxon.), 2 Vols. 1926 and 1928 Each | 3 | 12 |
| 12. | SAṂNYĀSA UPANIṢADS—17—with the Commentary of S'rī Upaniṣad Brahmayogin. Edited by T. R. Chintamani, M.A , and the Pandits of the Adyar Library, under the direction of Prof. C. Kunhan Raja, M.A., D. Phil. (Oxon.) 1929 ... | 4 | 0 |
| 13. | RUKMIṆĪ KALYĀṆA MAHĀ KĀVYA by Rājacūdāmaṇi Dīkṣita. Edited by the Pandits of the Adyar Library and Mr. T. R. Chintamani, M A., under the direction of Prof. C. Kunhan Raja, M.A., D. Phil. (Oxon.) 1929 ... | 2 | 0 |
| 14. | UNPUBLISHED MINOR UPANISADS with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited by the Pandits of the Adyar Library, under the direction of Prof. C. Kunhan Raja, M.A., D. Phil. (Oxon.) 1933 ... | 5 | 0 |
| 15. | TEN MAJOR UPANIṢADS with the Commentary of S'rī Upaniṣad Brahma Yogin, Edited by the Pandits of the Adyar Library | | |

Rs. A.

under the direction of Prof. C. Kunhan Raja, M.A., D. Phil. (Oxon.)

Is'a to Aitareya Vol. I —1935 ... 4 8
Chāndogya and Bṛhadāraṇyaka Vol. II —1936 6 0
Vol. I Boards } ... 5 8
Vol. II ,, }

16. Melarāgamālikā of Mahāvaidyanātha S'ivan. Edited by Pandit S. Subrahmanya Sastri, F.T.S. 1937 ... 2 0

17. Saṃgrahacūḍāmaṇi—Edited by Pandit S. Subrahmanya Sastri, F.T.S. with a critical Introduction in English by T. R. Srinivasa Ayyangar, B.A., L.T. 1938 ... 5 0

18. Pratyabhijñāhṛdayam (The Secret of Recognition) with English Translation and Notes by Dr. K. F. Leidecker, M.A., Ph.D., ; Text edited by the Staff of the Adyar Library under the direction of Dr. G. Srinivasa Murti, B.A., B.L., M.B.C.M., Vaidyaratna, Hon. Director, Adyar Library. 1938 ...

19. Bhavasaṃkrānti-Sūtra and Nāgārjuna's Bhavasaṃkrānti S'āstra—with the Commentary of Maitreyinātha—with English Translation by Pandit N. Aiyaswami Sastri, Professor, S. V. S. College, Tirupati. 1938 ... 2 4

20. Yoga Upaniṣads. Translated into English by T. R. Srinivasa Ayyangar, B.A., L.T., and Pandit S. Subrahmanya Sastri, F.T.S. 1938 : 5 0

21. * Where Theosophy and Science Meet (in four Parts) by a body of experts—Edited by Professor D. D. Kanga, M.A., I.E.S. (Retd.)

Part 1. Nature—From Macrocosm to Microcosm ... 14
Part 2. Man—From Atom to Man ... 14
Part 3. God—From Humanity to Divinity ... 4
Part 4. Some Practical Applications 1938 ... 2 4

22. Ṛgvedavyākhyā, Mādhavakṛtā—Edited by Dr. C. Kunhan Raja, M.A., D. Phil. (Oxon.) 1939 ... 6 0

23. The Number of Rasas. By V. Raghavan, M.A., Ph. D., Department of Sanskrit, University of Madras, with a Foreword by Prof. M. Hiriyanna, M.A., formerly Professor of Saṃskṛt Maharajah's College, Mysore, 1940 ... 3 0

24. Sāmānya Vedānta Upaniṣads—Translated into English by T. R. Srinivasa Ayyangar, B.A., L.T., and Pandit S. Subrahmanya Sastri, F.T.S., 1941 ... 5 0

25. Bhagavadgītārthaprakās'ikā of Upaniṣad Brahmayogin (Saṃskṛt). Edited by the Pandits of the Adyar Library with an Introduction by Dr. C. Kunhan Raja, M.A., D.Phil. (Oxon.), 1941 ... 4 0

26. Sāmaveda-Saṃhitā—With the Commentaries of Mādhava and Bharatasvāmin. Edited by Dr. C. Kunhan Raja, M.A., D. Phil. (Oxon.), 1941 ...

27. Rāja Dharma (Dewan Bahadur K. Krishnaswami Rao Lectures, 1938, University of Madras) by Rao Bahadur K. V. Rangaswami Aiyangar, M.A., 1941 ...

28. Varivasyārahasyam of Bhāsurānandanātha (2nd Edition) by Pandit S. Subrahmanya Sastri, F.T.S. (with English Translation), 1941 ...

* *Published under the auspices of the Adyar Library Association.*

Rs. a.

29. VYAVAHĀRANIRṆAYA OF VARADARĀJA—Edited by Rao Bahadur K. V. Rangaswami Aiyangar, M.A., and A. N. Krishna Aiyangar, M.A., L.T., Jt. Editor, *Brahmavidyā*, Adyar Library, 1941 ...

30. SAṂGĪTARATNĀKARA—With the Commentaries of Catura Kallinātha and Siṃhabhūpāla. Edited by Pandit S. Subrahmanya Sastri, F.T.S., Vol. I, 1941 ...

## PAMPHLETS

A VARIANT VERSION OF THE EKĀGNIKĀṆḌA (Reprinted from the Adyar Library Bulletin, October, 1939). Edited by K. Madhava Krishna Sarma, M.O.L. ... 0 3

THE RĀJAMṚGĀṄKA OF BHOJA (Reprinted from the Adyar Library Bulletin, October, 1940). Edited by K. Madhava Krishna Sarma, M.O.L. ... 0 4

## IN THE PRESS

1. ĀS'VALĀYANAGṚHYA-SŪTRA—With Devasvāmi Bhāṣya—Edited by Swami Ravi Tirtha.
2. ĀSVALĀYANAGṚHYA-SŪTRA (Bhāṣya of Devasvāmi). Translated into English by A. N. Krishna Aiyangar, M.A., L.T., Jt. Editor, *Brahmavidyā*, Adyar Library.
3. JIVĀNANDANAM OF ĀNANDARĀYAMAKHI with a Commentary by Vaidyaratna M. Duraiswami Aiyangar. Edited by Vaidyaratna G. Srinivasa Murti, B.A., B.L., M. B. & C. M. and Vaidyaratna Pandit M. Duraiswami Aiyangar.
4. S'RĪ PĀÑCARĀTRA RAKṢĀ of S'rī Vedānta Des'ika—Edited by Vaidyaratna M. Duraiswami Aiyangar and Vedānta S'iromaṇi T. Venugopalacharya.
5. ĀLAMBANAPARĪKṢĀ AND VṚTTI by Diṅnāga. With the Commentary of Dharmapāla. Edited by Pandit N. Aiyaswami Sastri.
6. VAIṢṆAVA UPANIṢADS—Translated into English by T. R. Srinivasa Aiyangar B.A., L.T. and Pandit S. Subrahmanya Sastri, F.T.S.
7. A DESCRIPTIVE CATALOGUE of the Manuscripts in the Adyar Library by K. Madhava Krishna Sarma, M.O.L., under the direction of Prof. C. Kunhan Raja, M.A., D. Phil. (Oxon.)—Vedic.
8. USĀṆIRUDDHO of Rāma Pāṇivāda. Edited by Pandit S. Subrahmanya Sastri, F.T.S. and Dr. C. Kunhan Raja, M.A., D. Phil. (Oxon.).
9. SOME CONCEPTS IN ALAṂKĀRA S'ĀSTRA by Dr. V. Raghavan M.A., Ph. D.
10. NYĀYAKUSUMĀÑJALI of Udayanācārya—Translated into English by Swami Ravi Tirtha.
11. THE ĀPASTAMBASMṚTI—Edited by A. N. Krishna Aiyangar, M.A., L.T., Joint Editor, *Brahmavidyā*, Adyar Library.
12. THE ACYUTARĀYĀBHYUDAYAM of Rājanātha Ḍiṇḍima—Sargas 7 to 12—by A. N. Krishna Aiyangar, M.A., L.T., Adyar Library.

## THE WORKS UNDER PREPARATION

1. CATURDAS'ALAKṢAṆĪ OF GADĀDHARA with Five Commentaries—Edited by Pandit N. Santanam Aiyer.
2. GAUTMASMṚTI—Edited by A. N. Krishna Aiyangar, M.A , L.T., Joint Editor, *Brahmavidyā*, Adyar Library.
3. THE KĀLĀDARS'A OF ĀDITYA BHAṬṬA—Edited by Rao Bahadur K. V. Rangaswami Aiyangar, M.A., and A. N. Krishna Aiyangar, M.A., L.T., Joint Editor, *Brahmavidyā*, Adyar Library.
4. THE VIṢṆUSMṚTI—With the Kes'ava Vaijayanti of Nanda Paṇḍita Edited by Rao Bahadur K. V. Rangaswami Aiyangar, M.A., and A. N. Krishna Aiyangar, M.A., L.T., Adyar Library.

# BRAHMAVIDYĀ

## THE ADYAR LIBRARY BULLETIN

*Editor*: PROF. C. KUNHAN RAJA, M.A., D.PHIL. (OXON.)

*Jt. Editor*: A. N. KRISHNA AIYANGAR. M.A., L.T.

*Rates of Subscription :*

Life Subscription Rs. 100
or $ 50
or £ 10

| | Per Annum | Single Copy |
|---|---|---|
| India & Ceylon | ... Rs. 6 | Rs. 2-8 |
| U. S. A. | ... $ 3 | $. 1.25 |
| British Empire | ... Sh. 12 | Sh. 5 |
| Other Countries | ... Rs. 9 | Rs. 3-8 |

*All Communications to be addressed to :*

THE DIRECTOR,
*Adyar Library*,
Adyar, Madras, S. India.